**तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः। निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव॥**

| | | | |
|---|---|---|---|
| महाबलः | மகா பலசாலியாகிய | सुसंरब्धः | மிகப் பரபரப்புற்றவராகி |
| वाली | வாலீ, | भास्करः | சூரியபகவான் |
| भ्रातुः | தம்பியினது | अस्ततटात् | அஸ்தகிரியிலிருந்து |
| तं निनदं | அந்த கர்ஜனையை | इव | வந்தாலெவ்வண்ணமோ அவ்வண்ணமே |
| श्रुत्वा | கேட்டு, | | |
| क्रुद्धः | சினங்கொண்டு | निष्पपात | வெளியில் வந்தான். |

**ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत्। गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥ १८ ॥**

| | | | |
|---|---|---|---|
| गगने | ஆகாசத்தில் | सुतुमुलं | மிகக் குழப்பமானதுமான |
| ग्रहयोः | இரு கிரகங்களாகிய | | |
| बुधाङ्गारकयोः | புதன், அங்காரகன் இவ்விருவர்களுக்கும் | युद्धं | போர் |
| | | ततः | அப்பொழுது |
| इव | என்றால் எப்படியோ அப்படியே | वालिसुग्रीवयोः | வாலி, சுக்ரீவன் இவ்விருவர்களுக்கும் |
| घोरं | பயங்கரமானதும் | अभूत् | உண்டாயிற்று. |

**तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः। जघ्नतुः समरेऽन्योन्यं भ्रातरौ क्रोधमूर्छितौ॥१९॥**

| | | | |
|---|---|---|---|
| क्रोधमूर्च्छितौ | கோபாவேசத்திலிருந்த | तलैः च | உள்ளங்கைகளாலும் |
| भ्रातरौ | பிராதாக்களாகிய அவ் | वज्रकल्पैः | வஜ்ராயுதங்களை நிகர்த்த |
| समरे | போரில் [விருவரும் | मुष्टिभिः च | முஷ்டிகளாலும் |
| अन्योन्यं | ஒருவரையொருவர் | जघ्नतुः | இடித்துக்கொண்டார்கள். |
| अशनिकल्पैः | இடியை நிகர்த்த | | |

**ततो धनुषि सन्धाय सायकं वज्रसन्निभम्। वालिसुग्रीवयोर्भ्रात्रोः न व्यक्तमुपधारयत् ॥**

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | वालिसुग्रीवयोः | வாலிசுக்ரீவர்கள் இருவர்க்கும் |
| वज्रसन्निभं | வஜ்ராயுதத்தை | | |
| सायकं | பாணத்தை [நிகர்த்த | व्यक्तं | இவன் இன்னானெனும் பாகுபாடை |
| धनुषि | வில்லில் | | |
| सन्धाय | தொடுத்து, | उपधारयत् न | கண்டுகொள்ள முடியாமலிருந்தார். |
| भ्रात्रोः | சகோதரர்களாகிய | | |

**ततो रामो धनुष्पाणिस्तावुभौ समुदैक्षत। अन्योन्यसदृशौ वीरावुभौ देवाविवाश्विनौ ॥**

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | अश्विनौ | அச்வினி |
| रामः | ஸ்ரீராமர் | देवौ | தேவர்களை |
| धनुष्पाणिः | தனுஷ்பாணியாய், | इव | போலவே |
| तौ | அந்த | | |
| वीरौ | வீரர்களாகிய | अन्योन्यसदृशौ | ஒருவனைப்போலவே இன்னொருவனும் இருக்கின்றவர்களாய் |
| उभौ | இருவர்களையும் | | |
| उभौ | இரண்டு | समुदैक्षत | பார்த்தார். |

**यन्नावगच्छत्सुग्रीवं वालिनं वाऽपि राघवः । ततो न कृतवान् बुद्धिं मोक्तुमन्तकरं शरम् ॥**

| | | | |
|---|---|---|---|
| राघवः | ஸ்ரீராமர், | यत् | ஆனதால் |
| सुग्रीवं | சுக்ரீவனையாவது | ततः | அப்பொழுது |
| वालिनं वा अपि | வாலியையாவது | अन्तकरं | கொல்லுந்தன்மை யுடைய |
| अवगच्छत् न | எவனின்னுனென்று தெரிந்துகொள்ள வில்லை. | शरं | பாணத்தை |
| | | मोक्तुं | பிரயோகிக்க |
| | | बुद्धिं न कृतवान् | துணியவில்லை. |

**एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना । अपश्यन्राघवं नाथमृश्यमूकं प्रदुद्रुवे ॥ २३ ॥**

| | | | |
|---|---|---|---|
| एतस्मिन् अन्तरे | இச்சமயத்தில் | नाथं | ரக்ஷகராகிய |
| सुग्रीवः | சுக்ரீவன், | राघवं | ஸ்ரீராமரை |
| तेन | அந்த | अपश्यन् | காணுதவனுய் |
| वालिना | வாலியால் | ऋश्यमूकं | ரிச்யமூகபர்வதத்தை நோக்கி |
| भग्नः | புடைக்கப்பட்டவனுய் | प्रदुद्रुवे | விரைந்தோடினன். |

**क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्झरीकृतः । वालिनाभिद्रुतः क्रोधात्प्रविवेश महद्वनम् ॥**

| | | | |
|---|---|---|---|
| क्लान्तः | சோர்ந்தவனுய், | वालिना | வாலியால் |
| रुधिरसिक्ताङ्गः | ரத்தத்தால் நனைந்த சரீரமுடையவனுய் | अभिद्रुतः | பின்பற்றி துரத்தியடிக்கப்பட்டவனுய் சுக்ரீவன் |
| प्रहारैः | அடிகளால் | महद्वनं | மகாவனத்துள், (மதங்கராவனத்தினுள்) |
| जर्झरीकृतः | காயப்படுத்தப்பட்டவனுய், | | |
| क्रोधात् | கோபாவேசத்தால் | प्रविवेश | புகுந்துவிட்டான். |

**तं प्रविष्टं वनं दृष्ट्वा वाली शापभयात्ततः । मुक्तो ह्यसि त्वमित्युक्त्वा संनिवृत्तो महाबलः ॥**

| | | | |
|---|---|---|---|
| ततः | அவ்விடத்தில் | त्वं | "நீ |
| महाबलः | மகாபலசாலியாகிய | मुक्तः हि | உயிருடன் விடப்பட்டவனுகவே |
| वाली | வாலி, | | |
| तं | அவனை | असि | இருக்கின்றனை" |
| वनं | வனத்தினுள் | इति | என்று |
| प्रविष्टं | புகுந்துவிட்டவனுக | उक्त्वा | சொல்லிவிட்டு, |
| दृष्ट्वा | பார்த்து, | संनिवृत्तः | திரும்பிப்போய்விட்டான். |
| शापभयात् | சாபத்திற்கஞ்சி | | |

**राघवोऽपि सह भ्रात्रा सह चैव हनूमता । तदेव वनमागच्छत्सुग्रीवो यत्र वानरः ॥२६॥**

| | | | |
|---|---|---|---|
| राघवः अपि | ஸ்ரீராமரும், | वानरः | வானரனுகிய |
| भ्रात्रा | தம்பியோடு | सुग्रीवः | சுக்ரீவன் |
| सह च | கூடவும் | यत्र | எங்கிருந்தானே |
| हनूमता | ஹனுமாரோடு | तत् | அந்த |
| सह एव | கூடவும் | वनं एव | வனத்திற்கே |
| | | आगच्छत् | திரும்பிவந்தார். |

**तं समीक्ष्यागतं रामं सुग्रीवः सहलक्ष्मणम् । ह्रीमान्दीनमुवाचेदं वसुधामवलोकयन् ॥२७॥**

| | |
|---|---|
| सुग्रीवः | சுக்ரீவன், |
| सहलक्ष्मणं | லக்ஷ்மணரோடுகூட |
| आगतं | திரும்பிவந்த |
| तं | அந்த |
| रामं | ஸ்ரீராமரை |
| समीक्ष्य | பார்த்து, |
| ह्रीमान् | வெட்கி |
| वसुधां | தரையை |
| अवलोकयन् | பார்த்துக்கொண்டு |
| इदं | பின்வருமாறு |
| दीनं | பரிதாபமாய் |
| उवाच | பேசினான். |

**आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् । वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् ॥**

| | |
|---|---|
| विक्रमं | "பராக்கிரமத்தை |
| दर्शयित्वा च | வெளிப்படையாய் காட்டிவிட்டும் |
| मां | என்னை |
| आह्वयस्व | போருக்கழை |
| इति | என்று |
| उक्त्वा | ஆக்ஞாபித்துவிட்டும் |
| वैरिणा | சத்ருவால் |
| घातयित्वा च | அடிபுண்ணபண்ணிவிட்டும் |
| इदानीं | இப்பொழுது |
| त्वया | தேவரீரால் |
| कृतं | செய்யப்பட்டது |
| किं | ஏனோ? |

**तामेव वेलां वक्तव्यं त्वया राघव तत्त्वतः । वालिनं तं न हन्मीति ततो नाहमितो व्रजे ॥**

| | |
|---|---|
| राघव | "ஸ்ரீராம! |
| तां | அந்த |
| वेलां एव | சமயத்திலேயே |
| तं | 'அந்த |
| वालिनं | வாலியை |
| हन्मि न | நான் கொல்லமாட்டேன்' |
| इति | என்று |
| तत्त्वतः | உள்ளபடி |
| त्वया वक्तव्यं | நீர் சொல்லியிருக்க வேண்டியது. |
| ततः | அப்பொழுது |
| इतः | இங்கிருந்து |
| अहं | நான் |
| न व्रजे | போயிருக்கமாட்டேன்." |

**तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः । करुणं दीनया वाचा राघवः पुनरब्रवीत् ॥**

| | |
|---|---|
| तस्य | அந்த |
| महात्मनः | மகாத்மாவாகிய |
| सुग्रीवस्य | சுக்ரீவன் |
| एवं | மேற்கண்டவாறு |
| ब्रुवाणस्य च | மொழிகையில் |
| राघवः | ஸ்ரீராமர் |
| दीनया | பரிதாபமான |
| वाचा | சொற்கொண்டு |
| करुणं | இரக்கத்துடன் |
| पुनः | மீளவும் |
| अब्रवीत् | பின்வருமாறு பதிலுரைத்தார். |

**सुग्रीव श्रूयतां तात क्रोधश्च व्यपनीयताम् । कारणं येन बाणोऽयं न मया स विसर्जितः ॥**

| | |
|---|---|
| तात | "அப்பா! |
| सुग्रीव | சுக்ரீவ! |
| क्रोधः च | கோபமானது |
| व्यपनीयतां | விடப்படட்டும். |
| सः | அந்த |
| अयं | இந்த |
| बाणः | பாணமானது |
| मया | என்னால் |
| येन | எக்காரணத்தால் |
| विसर्जितः न | போடப்படவில்லையோ, அந்த |
| कारणं | காரணமானது |
| श्रूयताम् | செவிக்கொடுத்து கேட்கப்படட்டும். |

**अलङ्कारेण वेषेण प्रमाणेन गतेन च। त्वं च सुग्रीव वाली च सदृशौ स्थः परस्परम् ॥**

| | | | |
|---|---|---|---|
| सुग्रीव | " சுக்ரீவ! | प्रमाणेन | உருவத்தாலும் |
| त्वं च | நீயும் | गतेन च | நடையாலும் |
| वाली च | வாலியும் | परस्परं | ஒருவரையொருவர் |
| अलङ्कारेण | அலங்காரத்தாலும் | सदृशौ | ஒத்திருக்கின்றவர்களாக |
| वेषेण | உடையாலும் | स्थः | இருக்கின்றீர்கள். |

**स्वरेण वर्चसा चैव प्रेक्षितेन च वानर। विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये ॥**

| | | | |
|---|---|---|---|
| वानर | " வானரரே! | वाक्यैः च | சொற்களாலும் |
| स्वरेण | குரலாலும் | वां | உங்களிருவர்களுள் |
| वर्चसा एव | காந்தியாலும் | व्यक्तिं च | ஒரு பேதத்தையும் |
| प्रेक्षितेन च | தோற்றத்தாலும் | न उपलक्षये | நான் காணவில்லை. |
| विक्रमेण च | பராக்கிரமத்தாலும் | | |

**ततोऽहं रूपसादृश्यान्मोहितो वानरोत्तम ॥ ३४ ॥**

| | | | |
|---|---|---|---|
| वानरोत्तम | " வானரோத்தமரே! | रूपसादृश्यात् | உருவவொத்துமையால் |
| अहं | நான் | मोहितः | என்னசெய்கிறதென்று தோன்றாதிருந்தேன். |
| ततः | அப்பொழுது | | |

**नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम्। जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः ॥**
**मूलघातो न नौ स्याद्धि द्वयोरपि कृतो मया ॥ ३५ ॥**

| | | | |
|---|---|---|---|
| नौ | " 'நம் | विशङ्कितः तु | உண்மையறியாதிருந்த நான் |
| द्वयोः अपि | இருவர்களில் | घोरं | பயங்கரமானதும் |
| मया | என்னால் | महावेगं | மகாசக்தியுடையதும் |
| मूलघातः | வேரின் அழிவு | शत्रुनिबर्हणं | சத்ருக்களுக்கு சத்ருவாய் |
| कृतः | விளைந்ததாய் | जीवितान्तकरं | உயிரை ஒழிக்க வல்ல |
| न स्यात् | ஆகக்கூடாது' | शरं | பாணத்தை [துடான |
| हि | என்கிற காரணத்தால் | उत्सृजामि न | விடாதிருந்தேன். |
| सादृश्यात् | ஒத்திருந்தமையால் | | |

**त्वयि वीरे विपन्ने हि अज्ञानाल्लाघवान्मया। मौढ्यं च मम बाल्यं च ख्यापितं स्यात् कपीश्वर ॥**

| | | | |
|---|---|---|---|
| वीरे त्वयि | " வீரராகிய நீர் | मम | எனது |
| मया | என்னால் | मौढ्यं | அசட்டுத்தனம் |
| अज्ञानात् | ஆராயாது | ख्यापितं | பிரசித்திபெற்றதாய் |
| लाघवात् | அவசரத்தால் | स्यात् च | விளங்குமே. |
| विपन्ने हि | ஆபத்தையடைந்தீர் என்றால் | बाल्यं | சிறுபிள்ளைத்தனம் |
| कपीश्वर | வானரமன்னா! | च | அப்படியே பிரசித்தி பெற்று விளங்குமே. |

**दत्ताभयवधो नाम पातकं महदुच्यते ॥ ३७ ॥**

| | | | |
|---|---|---|---|
| दत्ताभयवधः नाम | "அபயம்பெற்றவனைக் கொல்லுதல் என்பதோ | महत् पातकं | மகா பாதகமென |
| | | उच्यते | சாஸ்திரங்களால் கூறப்பட்டிருக்கிறது. |

**अहं च लक्ष्मणश्चैव सीता च वरवर्णिनी । त्वदधीना वयं सर्वे वनेऽस्मिञ्शरणं भवान् ॥**

| | | | |
|---|---|---|---|
| अहं च | "நானும் | त्वदधीनाः | நின் பொறுப்புள்ளோர்கள். |
| लक्ष्मणः च एव | லக்ஷ்மணரும் | | |
| वरवर्णिनी | பெண்நாயகமாகிய | अस्मिन् | இந்த |
| सीता च | ஸீதையும் | वने | காட்டில் |
| वयं | இந்த நாங்கள் | भवान् | நீர் |
| सर्वे | எல்லோரும் | शरणम् | துணையாளர். |

**तस्माद्युद्ध्यस्व भूयस्त्वं मा शङ्कां गन्तुमर्हसि । एतन्मुहूर्ते सुग्रीव पश्य वालिनमाहवे ॥**
**निरस्तमिषुणैकेन वेष्टमानं महीतले ॥ ३९ ॥**

| | | | |
|---|---|---|---|
| तस्मात् | "ஆகையால் | आहवे | போரில் |
| त्वं | நீர் | वालिनं | வாலியை |
| भूयः | மறுபடி | एकेन इषुणा | ஒரு பாணத்தால் |
| युध्यस्व | யுத்தம் செய்யும்; | निरस्तं | எய்யப்பட்டு |
| शङ्कां गन्तुं | சந்தேகங்கொள்ள | महीतले | பூமியில் |
| मा अर्हसि | வேண்டாம். | वेष्टमानं | துடித்துக்கொண்டிருக்கின்றவனைப் |
| सुग्रीव | சுக்ரீவ! | | |
| एतन्मुहूर्ते | இக்கணமே | पश्य | பார்ப்பீர். |

**अभिज्ञानं कुरुष्व त्वमात्मनो वानरोत्तम । येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥ ४० ॥**

| | | | |
|---|---|---|---|
| वानरोत्तम | "வானரோத்தமனே! | अभिजानीयां | நான் கண்டுகொள்வேனோ அந்த |
| द्वन्द्वयुद्धं | த்வந்த்வயுத்தத்தை | | |
| उपागतं | அடைந்த | अभिज्ञानं | அடையாளத்தை |
| त्वां | உம்மை | त्वं | நீர் |
| येन | எதினால் | आत्मनः | உமக்கு |
| | | कुरुष्व | செய்துகொள்ளும். |

**गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम् । कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥**

| | | | |
|---|---|---|---|
| लक्ष्मण | "லக்ஷ்மணா! | उत्पाट्य | பிடுங்கி, |
| शुभलक्षणां | நல்ல அழகுவாய்ந்து | अस्य | இந்த |
| फुल्लां | பூத்திருக்கும் | महात्मनः | மஹாத்மாவாகிய |
| इमां | இந்த | सुग्रीवस्य | சுக்ரீவருடைய |
| गजपुष्पीं | கஜபுஷ்பி என்ற கொடியை | कण्ठे | கழுத்தில் |
| | | कुरु | போடு. |

ततो गिरितटे जातामुत्पाट्य कुसुमाकुलाम् । लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे न्यसर्जयत् ॥

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | तां | அந்த |
| लक्ष्मणः | லக்ஷ்மணர் | गजपुष्पीं | கஜபுஷ்பியெனும் |
| गिरितटे | மலைப் பிரதேசத்தில் | उत्पाट्य | பிடுங்கி, [கொடியை |
| जातां | முளைத்திருந்ததும் | तस्य | அவனது |
| कुसुमाकुलां | புஷ்பங்கள் செறிந்திருந்ததுமான | कण्ठे | கழுத்தில் |
| | | न्यसर्जयत् | போட்டார். |

स तया शुशुभे श्रीमांल्लतया कण्ठसक्तया ॥ ४३ ॥

| | | | |
|---|---|---|---|
| श्रीमान् | ஸ்ரீமானும் | तया | அந்த |
| सः | அவன் [பட்ட | लतया | கொடியால் |
| कण्ठसक्तया | கழுத்தில் போடப்- | शुशुभे | நன்கு விளங்கினான். |

मालयेव बलाकानां ससन्ध्य इव तोयदः । विभ्राजमानो वपुषा रामवाक्यसमाहितः ॥
जगाम सह रामेण किष्किन्धां वालिपालिताम् ॥ ४४ ॥

| | | | |
|---|---|---|---|
| बलाकानां | கொக்குகளின் | रामवाक्य-समाहितः | ஸ்ரீராமரது சொல்லால் தேற்றுரவுபெற்றவ |
| मालया इव | வரிசையாலேயே | रामेण | ஸ்ரீராமரோடு [னுகி |
| ससन्ध्यः | சந்தியாகாலத்தோடு கூடிய | सह | கூட |
| तोयदः इव | மேகம்போலவே | वालिपालितां | வாலியினுல் பரிபாலிக்கப்பட்ட |
| वपुषा | அழகால் | किष्किन्धां | கிஷ்க்கிந்தைக்கு |
| विभ्राजमानः | விளங்கிக்கொண்டு | जगाम | புறப்பட்டான். |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे द्वादशः सर्गः ॥

आदितः श्लोकाः 9839 किष्किन्धाकाण्डे आदितः श्लोकाः 587

## त्रयोदशः सर्गः—பதின்மூன்றுவது ஸர்க்கம் ॥ १३ ॥

सप्तजनाश्रमदर्शनम्—ஸப்தஜனாச்ரமத்தை தரிசிப்பது.

ऋश्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः । जगाम सहसुग्रीवो वालिविक्रमपालिताम् ॥
समुद्यम्य महच्चापं रामः काञ्चनभूषितम् । शरांश्चादित्यसंकाशान्गृहीत्वा रणसाधकान् ॥

| | | | |
|---|---|---|---|
| सः | அந்த | रामः | ஸ்ரீராமர், |
| धर्मात्मा | தர்மாத்மாவும் | काञ्चनभूषितं | பொன்புனைந்த |
| लक्ष्मणाग्रजः | லக்ஷ்மணரின் தமையனுமான | महत् | மகத்தான |
| | | चापं | சாபத்தை |

| | |
|---|---|
| समुद्यम्य | நாணேற்றிக்கொண்டு, |
| आदित्य-सङ्काशान् | சூரியனை நிகர்த்தவைகளும் |
| रणसाधकान् च | போரில் நினைத்தவைகளை அளிக்கவல்லவைகளுமான |
| शरान् | பாணங்களையும் |
| गृहीत्वा | எடுத்துக்கொண்டு, |
| वालिविक्रम-पालितां | வாலியின் பராக்கிரமத்தால் பரிபாலிக்கப்பட்டதுமான |
| किष्किन्धां | கிஷ்கிந்தைக்கு |
| ऋश्यमूकात् | ரிச்யமூகத்தினின்று |
| सहसुग्रीवः | சுக்ரீவனுடன் |
| जगाम | நடந்தார். |

**अग्रतस्तु ययौ तस्य राघवस्य महात्मनः । सुग्रीवः संहतग्रीवो लक्ष्मणश्च महाबलः ॥ ३ ॥**

| | |
|---|---|
| तस्य | அந்த |
| महात्मनः | மகாத்மாவாகிய |
| राघवस्य | ஸ்ரீராமருக்கு |
| अग्रतः | முன்னே |
| सुग्रीवः | சுக்ரீவன் |
| संहतग्रीवः | கழுத்தை அசையாது வைத்துக்கொண்டு |
| ययौ | சென்றான். |
| महाबलः | மகாபலசாலியாகிய |
| लक्ष्मणः तु | லக்ஷ்மணரும் |
| च | அப்படியே முன் சென்றார். |

**पृष्ठतो हनुमान्वीरो नलो नीलश्च वानरः । तारश्चैव महातेजा हरियूथपयूथपः ॥ ४ ॥**

| | |
|---|---|
| वीरः | வீராகிய |
| हनुमान् | ஹனுமாரும், |
| नलः | நளனும், |
| नीलः | நீலனென்ற |
| वानरः च | வானரனும், |
| महातेजाः | மகாபலசாலியும், |
| हरियूथपयूथपः | சேனைத்தலைவர்களுக்குத்தலைவனுமான |
| तारः च | தாரனும் |
| पृष्ठतः एव | பின்பற்றிச்சென்றார்கள். |

**ते वीक्षमाणा वृक्षांश्च पुष्पभारावलम्बिनः । प्रसन्नाम्बुवहाश्चैव सरितः सागरंगमाः ॥ ५ ॥**
**कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा । शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥**
**वैडूर्यविमलैस्तोयैः पद्मैश्चाशोककुड्मलैः । शोभितान्सजलान्मार्गे तटाकांश्च व्यलोकयन् ॥**
**कारण्डैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः । चक्रवाकैस्तथा चान्यैः शकुनैः प्रतिनादितान् ॥ ८ ॥**

| | |
|---|---|
| ते | அவர்கள் |
| पुष्पभारावलम्बिनः | பூக்களின் சுமையால் |
| वृक्षान् च | மரங்களையும் [வளைந்த |
| प्रसन्नाम्बुवहाः | தெளிந்த நீரோட்டமுள்ளவைகளும் |
| सागरंगमाः च | சமுத்திரத்தைநோக்கி ஓடுகின்றவைகளுமான |
| सरितः एव | நதிகளையும் |
| कन्दराणि च | பள்ளத்தாக்குகளையும் |
| शैलान् च | மலைகளையும் |
| निर्दराणि च | மலையருவிகளையும் |
| गुहाः तथा | குகைகளையும் |
| मुख्यानि | சிறந்த |
| शिखराणि च | சிகரங்களையும் |
| प्रियदर्शनाः | அழகிய |
| दरीः च | மலைகளின் பிளப்புகளையும் |
| वैडूर्यविमलैः | வைடூர்யம்போல் தெளிவாயிருக்கின்ற |

| | | | |
|---|---|---|---|
| तोयैः | ஜலங்களாலும் | वञ्जुलैः | வஞ்சுளங்களாலும் |
| पद्मैः | தாமரைகளாலும் | जलकुक्कुटैः | நீர்க்கோழிகளாலும் |
| अशोककुड्मलैः | அசோகத்தின் மலர்ந்து கொண்டிருந்த மொட்டுகளாலும் | चक्रवाकैः तथा | சக்ரவாகங்களாலும் |
| | | अन्यैः | இன்னும் பல |
| | | शकुनैः च | பக்ஷிகளாலும் |
| शोभितान् | அழகுவாய்ந்து விளங்கும் | प्रतिनादितान् | ஒலிக்கப்பட்டவைகளுமான |
| सजलान् | நீர்நிறைந்து விளங்குகின்றவைகளும் | तटाकान् च | தடாகங்களையும் |
| कारण्डैः | நீர்காக்கைகளாலும் | मार्गे | வழியில் [றவர்களாய் |
| सारसैः | அன்றில்களாலும் | वीक्षमाणाः | நாற்புறமும்பார்க்கின்- |
| हंसैः | அன்னங்களாலும் | व्यलोकयन् | கவனித்தார்கள். |

मृदुशष्पाङ्कुराहारान्मृगपोतांश्च निर्भयान्। चरतः सर्वतोऽपश्यन्स्थलीषु हरिणान्स्थितान्॥

| | | | |
|---|---|---|---|
| निर्भयान् | நிர்ப்பயமாய் | स्थितान् | நின்றுகொண்டும் |
| मृदुशष्पाङ्कुराहारान् | மெல்லிய இளம் புற்களின் நுனிகளை மேய்கின்றவைகளான | सर्वतः | எங்கும் |
| | | चरतः च | திரிந்துகொண்டும் இ |
| मृगपोतान् | மான்குட்டிகளையும் | हरिणान् | மான்களையும் [ருக்கிற |
| स्थलीषु | பல இடங்களில் | अपश्यन् | பார்த்தார்கள். |

तटाकवैरिणश्चापि शुक्लदन्तविभूषितान्। घोरानेकचरान्वन्यान्द्विरदान्कूलघातिनः ॥१०॥
मत्तान्गिरितटोत्कृष्टान्पर्वतानिव जङ्गमान्। वारणान्वारिदप्रख्यान्महीरेणुसमुक्षितान् ॥११॥
वने वनचरांश्चान्यान्खेचरांश्च विहङ्गमान्। पश्यन्तस्त्वरिता जग्मुः सुग्रीववशवर्तिनः ॥१२॥

| | | | |
|---|---|---|---|
| सुग्रीववशवर्तिनः | சுக்ரீவன் கூடச் சென்ற அவர்களும் | पर्वतान् इव | மலைகளைப்போன்றவைகளும் |
| तटाकवैरिणः | தடாகங்களைக் கலக்குகிறவைகளும் | वारिदप्रख्यान् | மேகங்களை நிகர்த்தவைகளும் |
| शुक्लदन्तविभूषितान् | வெளிறிய தந்தங்களால் அழகுற்று விளங்குகிறவைகளும் | महीरेणुसमुक्षितान् | பூமியின் புழுதியால் படியப்பெற்றவைகளும் [களும் |
| | | वन्यान् | காட்டிலுள்ளவை |
| घोरान् | பயங்கரமானவைகளும் | द्विरदान् अपि | இருதந்தமுள்ளவைகளுமான |
| एकचरान् | தனித்தனியே திரிகின்றவைகளும் | वारणान् च | யானைகளையும் |
| | | वने | காட்டில் |
| कूलघातिनः | கரைகளை நாசம்செய்கின்றவைகளும் | अन्यान् | மற்றுமுள்ள |
| | | वनचरान् च | காட்டுமிருகங்களையும் |
| मत्तान् | மதம்கொண்டவைகளும் | खेचरान् | ஆகாயத்தில் பறந்து திரியும் |
| गिरितटोत्कृष्टान् | மலையடிவாரங்களில் உராய்கின்றவைகளும் | विहङ्गमान् च | பறவைகளையும் |
| | | पश्यन्तः | பார்த்துக்கொண்டே |
| जङ्गमान् | நடந்துகொண்டிருக்கும் | त्वरिताः | வேகமாகவே |
| | | जग्मुः | நடந்துசென்றார்கள். |

**तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः । द्रुमषण्डं वनं दृष्ट्वा रामः सुग्रीवमब्रवीत् ।। १३ ।।**

| | |
|---|---|
| तत्र | அப்பொழுது |
| तेषां | அவர்கள் |
| त्वरितं | வேகமாய் [கையில் |
| गच्छतां तु | போய்க்கொண்டிருக்- |
| रघुनन्दनः | ரகுகுலதிலகராகிய |
| रामः | ஸ்ரீராமர், |
| द्रुमषण्डं | மரங்களடர்ந்த |
| वनं | காடொன்றை |
| दृष्ट्वा | கண்டு, |
| सुग्रीवं | சுக்ரீவனைப்பார்த்து |
| अब्रवीत् | பின்வருமாறு வினவினர். |

**एष मेघ इवाकाशे वृक्षषण्डः प्रकाशते । मेघसंघातविपुलः पर्यन्तकदलीवृतः ।। १४ ।।**

| | |
|---|---|
| एषः | " இந்த |
| वृक्षषण्डः | மரச்சூழல் |
| मेघसंघातविपुलः | மேகக்கூட்டங்களைப் போல் விசாலமாய் |
| पर्यन्तकदलीवृतः | நால்புறமும் வாழைகளால் சூழப்பட்டதாய், |
| आकाशे | ஆகாசத்தில் |
| मेघः इव | மேகம்போல் |
| प्रकाशते | விளங்குகிறது. |

**किमेतज्ज्ञातुमिच्छामि सखे कौतूहलं महत् । कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ।।**

| | |
|---|---|
| सखे | " அன்பரே ! |
| एतत् किं | இது என்ன ? என்று |
| ज्ञातुं | அறிந்துக்கொள்ள |
| इच्छामि | வேண்டுகிறேன். |
| कौतूहलं | விஷயம் தெரிந்துக் கொள்ளவேண்டுமெனும் ஆசை |
| महत् | அதிகம். |
| त्वया | உம்மால் |
| अहं | நான் |
| कौतूहलापनयनं कर्तुं | ஆசை நிறைவேறுதலை செய்துக்கொள்ள |
| इच्छामि | விரும்புகிறேன்." |

**तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महद्वनम् ।।१६।।**

| | |
|---|---|
| सुग्रीवः | சுக்ரீவன், |
| तस्य | அந்த |
| महात्मनः | மகாத்மாவாகிய |
| राघवस्य | ஸ்ரீராமருடைய |
| तद्वचनं | அம்மொழியை |
| श्रुत्वा | கேட்டு, |
| तत् | அந்த |
| महद्वनं | மகாவனத்தைப்பற்றி, |
| गच्छन् एव | நடந்துகொண்டே |
| अथ | பின்வருமாறு |
| आचचक्षे | விளங்க விளம்பினன். |

**एतद्राघव विस्तीर्णमाश्रमं श्रमनाशनम् । उद्यानवनसम्पन्नं स्वादुमूलफलोदकम् ।। १७ ।।**

| | |
|---|---|
| राघव | " ஸ்ரீராம ! |
| एतत् | இந்த |
| आश्रमं | ஆச்ரமமானது |
| विस्तीर्णं | விசாலமானது. |
| श्रमनाशनं | சிரமத்தைப்போக்க வல்லது. |
| उद्यानवनसंपन्नं | உத்தியான வனங்கள் நிறைந்துள்ளது. |
| स्वादुमूल- फलोदकम् | ருசிகரமான கிழங்குகளையும், கனிகளையும் தீர்த்தங்களையுமுடையது. |

**अत्र सप्तजना नाम मुनयः संशितव्रताः। सप्तैवासन्नधःशीर्षा नियता जलशायिनः ॥१८॥**

| | | | |
|---|---|---|---|
| अत्र | " இவ்விடத்தில் | जलशायिनः एव | ஜலத்திலேயே வசித்துக்கொண்டு, |
| सप्तजनाः नाम | ஸப்தஜனர்கள் என்று | संशितव्रताः | கடுந்தவம் புரிபவர்களாய், |
| सप्त | ஏழு | | |
| मुनयः | முனிவர்கள், | | |
| अधःशीर्षाः | தலைகீழாய் இருந்து கொண்டு, | नियताः | ஜிதேந்திரியர்களாய், |
| | | आसन् | இருந்தார்கள். |

**सप्तरात्रकृताहारा वायुना वनवासिनः। दिवं वर्षशतैर्याताः सप्तभिः सकलेबराः ॥ १९ ॥**

| | | | |
|---|---|---|---|
| वनवासिनः | " வனவாசிகளாகிய இவர்கள், | सप्तभिः वर्षशतैः | ஏழுநூறு வருஷத்திற்கப்பால் |
| वायुना | வாயுவைக்கொண்டே | सकलेबराः | சரீரங்களுடனேயே |
| सप्तरात्र- कृताहाराः | ஏழுநாள்க்கொருதரம் உணவுகொண்டவர்களாய் | दिवं | ஸ்வர்க்கத்திற்கு |
| | | याताः | சென்றார்கள். |

**तेषामेवंप्रभावानां द्रुमप्राकारसंवृतम्। आश्रमं सुदुराधर्षमपि सेन्द्रैः सुरासुरैः ॥ २० ॥**

| | | | |
|---|---|---|---|
| एवंप्रभावानां | " இப்படிப்பட்ட மகிமைகொண்ட | द्रुमप्राकारसंवृतं | விருக்ஷங்களாகிற மதில்களால் சூழப்பட்டது. |
| | | सेन्द्रैः | இந்திரனுள்ளிட்ட |
| तेषां | அவர்களின் | सुरासुरैः अपि | தேவர்களாலும் அசுரர்களாலுங்கூட |
| आश्रमं | ஆச்ரமமிது. | सुदुराधर्षम् | பிரவேசிக்க முடியாதது. |

**पक्षिणो वर्जयन्त्येतत्तथान्ये वनचारिणः। विशन्ति मोहाद्ये तत्र निवर्तन्ते न ते पुनः ॥**

| | | | |
|---|---|---|---|
| पक्षिणः | " பறவைகளும், | मोहात् | விஷயம் தெரியாமையால் |
| तथा | அப்படியே | ये | எவைகள் |
| अन्ये | இதர | विशन्ति | புகுகின்றனவோ ; |
| वनचारिणः | காட்டுமிருகங்களும் | ते | அவைகள் |
| एतत् | இதை | पुनः | மீண்டும் |
| वर्जयन्ति | விட்டு ஓடிப்போய் விடுகின்றன. | निवर्तन्ते न | உயிருடன் வருவதில்லை. |
| तत्र | இதில் | | |

**विभूषणरवास्तत्र श्रूयन्ते सकलाक्षराः। तूर्यगीतस्वनाश्चात्र गन्धो दिव्यश्च राघव ॥२२॥**

| | | | |
|---|---|---|---|
| तत्र | " இவ்விடத்தில் | श्रूयन्ते | கேட்கப்படுகின்றன. |
| विभूषणरवाः | ஆபரணங்களின் சப்தங்களும், | राघव | ஸ்ரீராம ! |
| सकलाक्षराः | இனிய சொற்களோடு கூடிய | अत्र | இவ்விடத்தில் |
| | | दिव्यः | திவ்யமான |
| तूर्यगीतस्वनाः | தூரியவாத்தியம், பாடல்கள் இவைகளின் தொனியும் | गन्धः | பரிமளமும் |
| | | च | அப்படியே வீசுகின்றது. |

**त्रेताग्नयोऽपि दीप्यन्ते धूमो ह्यत्र प्रकाशते । वेष्टयन्निव वृक्षाग्रान्कपोताङ्गारुणो घनः ॥**

| | | | |
|---|---|---|---|
| त्रेताग्नयः अपि | " திரேதாக்னிகளும் | कपोताङ्गारुणः | மாடப்பிறாவின் அங்கத்தினது சிவப்புநிறமுற்ற |
| दीप्यन्ते | எரிந்துகொண்டிருக்கின்றன. | घनः | மேகம் |
| हि | ஆகையால்தான் | इव | போலவே |
| अत्र | இவ்விடத்தில் | वेष्टयन् | சுற்றிக்கொண்டு |
| धूमः | புகையானது | प्रकाशते | காணப்படுகிறது. |
| वृक्षाग्रान् | மரங்களின் நுனிகளை | | |

**एते वृक्षाः प्रकाशन्ते धूमसंसक्तमस्तकाः । मेघजालप्रतिच्छन्ना वैडूर्यगिरयो यथा ॥२४॥**

| | | | |
|---|---|---|---|
| एते | " இந்த | मेघजाल-प्रतिच्छन्नाः | மேகக்கூட்டங்களால் மறைக்கப்பட்டவைகளாய் |
| वृक्षाः | மரங்கள் | वैडूर्यगिरयः | வைடூர்யமலைகள் |
| धूमसंसक्त-मस्तकाः | புகையால் பற்றப்பட்ட நுனிகளையுடையவைகளாய், | यथा | போலவே |
| | | प्रकाशन्ते | விளங்குகின்றன. |

**कुरु प्रणामं धर्मात्मंस्तान्समुद्दिश्य राघव । लक्ष्मणेन सह भ्रात्रा प्रयतः संयताञ्जलिः ॥**

| | | | |
|---|---|---|---|
| धर्मात्मन् | " தர்மாத்மாவே! | समुद्दिश्य | உத்தேசித்து |
| राघव | ஸ்ரீராம! | प्रयतः | பக்தியோடு ஒருப்பட்ட மனமுடையவராய் |
| भ्राता | தம்பியான | संयताञ्जलिः | அஞ்சலிஹஸ்தராகி |
| लक्ष्मणेन | லக்ஷ்மணரோடு | प्रणामं | நமஸ்காரத்தை |
| सह | கூட | कुरु | செய்யும். |
| तान् | அவர்களை | | |

**प्रणमन्ति हि ये तेषां मुनीनां भावितात्मनाम् । न तेषामशुभं किंचिच्छरीरे राम विद्यते ॥**

| | | | |
|---|---|---|---|
| राम | " ஸ்ரீராம! | प्रणमन्ति हि | பணிகின்றார்களோ; |
| तेषां | அந்த | तेषां | அவர்களுக்கு |
| भावितात्मनां | ஆத்மஞானிகளாகிய | शरीरे | உடலில் |
| मुनीनां | முனிவர்களை | किंचित् | எவ்வித |
| ये | எவர்கள், | अशुभं | ரோகமும் |
| | | न विद्यते | உண்டாகிறதில்லை." |

**ततो रामः सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः । समुद्दिश्य महात्मानस्तानृषीनभ्यवादयत् ॥**

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | तान् | அந்த |
| रामः | ஸ்ரீராமர், | महात्मानः | மகாத்மாக்களை |
| भ्राता | தம்பியாகிய | समुद्दिश्य | உத்தேசித்து, |
| लक्ष्मणेन | லக்ஷ்மணரோடு | अभ्यवादयत् | அடிபணிந்து சேவித்தார். |
| सह | கூட | | |
| कृताञ्जलिः | அஞ்சலிஹஸ்தராகி | | |

अभिवाद्य च धर्मात्मा रामो भ्राता च लक्ष्मणः । सुग्रीवो वानराश्चैव जग्मुः संहृष्टमानसाः ॥

| | | | |
|---|---|---|---|
| अभिवाद्य च | அடிபணிந்து சேவித்ததற்குப் பின், | सुग्रीवः च | சுக்ரீவனும், |
| धर्मात्मा | தர்மாத்மாவாகிய | वानराः एव | வானரர்களும் |
| रामः | ஸ்ரீராமரும், | संहृष्टमानसाः | உவகைபூத்த உள்ளத்தினராய் |
| भ्राता | தம்பியாகிய | | |
| लक्ष्मणः च | லக்ஷ்மணரும், | जग्मुः | வழிநடந்தார்கள். |

ते गत्वा दूरमध्वानं तस्मात्सप्तजनाश्रमात् । ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥

| | | | |
|---|---|---|---|
| ते | அவர்கள் | वालिपालितां | வாலியால் பாலிக்கப்பட்ட |
| तस्मात् | அந்த | | |
| सप्तजनाश्रमात् | சப்தஜனமெனும் ஆச்ரமத்திலிருந்து | दुराधर्षां | பிறரால் புகமுடியாத |
| | | तां | அந்த |
| दूरं | வெகுதூரம் | किष्किन्धां | கிஷ்கிந்தையை |
| अध्वानं | வழி | ददृशुः | கண்முன் கண்டார்கள். |
| गत्वा | நடந்து, | | |

ततस्तु रामानुजरामवानराः प्रगृह्य शस्त्राण्युदिताग्र्यतेजसः ।
पुरीं सुरेशात्मजवीर्यपालितां वधाय शत्रोः पुनरागताः सह ॥ ३० ॥

| | | | |
|---|---|---|---|
| ततः | அனந்தரம் | प्रगृह्य | கையிலேந்திக்கொண்டு, |
| रामानुजराम- वानराः तु | லக்ஷ்மணரும் ஸ்ரீராமரும் வானரர்களும் | सुरेशात्मज- वीर्यपालितां | இந்திரகுமாரனது வீர்யத்தால் பரிபாலிக்கப்பட்ட |
| उदिताग्र्यतेजसः | சத்ருவை மன்னியாதமிருந்த கோபம் பொங்கியவர்களாய் | पुरीं | நகருக்கு |
| शत्रोः | சத்ருவினது | सह | ஏககாலத்திலே |
| वधाय | வதத்தின்பொருட்டு | पुनः | திரும்பி |
| शस्त्राणि | ஆயுதங்களை | आगताः | வந்துசேர்ந்தார்கள். |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे त्रयोदशः सर्गः ॥

आदितः श्लोकाः 9869 — किष्किन्धाकाण्डे आदितः श्लोकाः 617

## चतुर्दशः सर्गः—பதினான்காவது ஸர்க்கம் ॥ १४ ॥

### युद्धाय वाल्याह्वानम्—யுத்தத்திற்கு வாலியையழைப்பது.

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् । वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ॥

| | | | |
|---|---|---|---|
| ते | அவர்கள் | गत्वा | அடைந்து, |
| सर्वे | எல்லோரும் | गहने वने | அடர்ந்த காட்டில் |
| वालिनः | வாலியினது | वृक्षैः | மரங்களால் |
| पुरीं | நகராகிய | आत्मानं | தன்னை |
| किष्किन्धां | கிஷ்கிந்தையை | आवृत्य | மறைத்துக்கொண்டு, |
| त्वरितं | வேகமாய் | व्यतिष्ठन् | காத்துநின்றார்கள், |

**विसार्य सर्वतो दृष्टिं कानने काननप्रियः। सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ॥ ३॥**

| | | | |
|---|---|---|---|
| विपुलग्रीवः | நீண்ட கழுத்துடைய | दृष्टिं विसार्य | சுற்றிப்பார்த்து, |
| काननप्रियः | வானரனுகிய | भृशं | அளவுகடந்த |
| सुग्रीवः | சுக்ரீவன், | क्रोधं | கோபத்தை |
| कानने | காட்டில் | आहारयत् | அடைந்தான். |
| सर्वतः | நாற்புறமும் | | |

**ततः स निनदं घोरं कृत्वा युद्धाय चाह्वयत्। परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् ॥**
**गर्जन्निव महामेघो वायुवेगपुरःसरः ॥ ४ ॥**

| | | | |
|---|---|---|---|
| परिवारैः | பரிவாரங்களால் | महामेघः | மகாமேகம் |
| परिवृतः | சூழப்பட்ட | इव | போலாகி |
| सः | அவன், | घोरं | பயங்கரமான |
| नादैः | கர்ஜனைகளால் | निनदं | கர்ஜனையை |
| अम्बरं | ஆகாயத்தை | ततः | அப்பொழுது |
| भिन्दन् इव | பிளப்பவன்போலாகி | कृत्वा च | செய்துகொண்டே, |
| वायुवेगपुरःसरः | வாயுவேகத்தால் தகை [யப்பட்டு | युद्धाय | போருக்கு |
| गर्जन् | இடிக்கும் | आह्वयत् | அறைகூவினன். |

**अथ बालार्कसदृशो दृप्तसिंहगतिस्तदा। दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ॥५॥**

| | | | |
|---|---|---|---|
| तदा | அப்பொழுது | क्रियादक्षं | காரியங்களை வாக்களித்தபடி முடிக்கும் |
| बालार्कसदृशः | இளங்கதிரவனை யார்த்தவனும், | रामं दृष्ट्वा | ஸ்ரீராமரைப் பார்த்து, |
| दृप्तसिंहगतिः | கொழுத்த சிங்கநடையுடையவனுமான | वाक्यं | ஒரு சொல்லை |
| | | अथ | இங்ஙனம் |
| सुग्रीवः | சுக்ரீவன், | अब्रवीत् | நிகழ்த்தினன். |

**हरिवागुरया व्याप्तां तप्तकाञ्चनतोरणाम्।**
**प्राप्ताः स्म ध्वजयन्त्राढ्यां किष्किन्धां वालिनः पुरीम् ॥ ६ ॥**

| | | | |
|---|---|---|---|
| हरिवागुरया | "வானரக்காவலர்களால் | ध्वजयन्त्राढ्यां | கொடிகளையும் யந்திரங்களையுமுடையதும், |
| व्याप्तां | நிறைந்துள்ளதும், | वालिनः | வாலியினது |
| तप्तकाञ्चन- तोरणां | நல்ல பொன்னுலான தோரணங்களையுடையதும், | पुरीं | நகருமாகிய |
| | | किष्किन्धां | கிஷ்கிந்தைக்கு |
| | | प्राप्ताः स्म | வந்துசேர்ந்து விட்டோம். |

**प्रतिज्ञा या त्वया वीर कृता वालिवधे पुरा। सफलां तां कुरु क्षिप्रं लतां काल इवागतः ॥**

| | | | |
|---|---|---|---|
| वीर | "வீரரே! | प्रतिज्ञा | வாக்குதத்தம் |
| पुरा | முன்னமேயே | या | எதுவோ அது, |
| वालिवधे | வாலிவதைவிஷயத் [தில் | कृता | அருளிவிடப்பட்டது. |
| त्वया | தேவரீரால் | कालः | ஏற்றகாலம் |

| | | | |
|---|---|---|---|
| आगतः | வந்துவிட்டது. | तां | அதை |
| लतां | உதவியைக்கோரும் மெலிந்த ஸ்த்ரீயை | सफलां | காரியஸித்திபெற்ற |
| इव | போலிருக்கிற | क्षिप्रं | இப்பவே [தாய் |
| | | कुरु | செய்தருளும்." |

**एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः । तमथोवाच सुग्रीवं वचनं शत्रुसूदनः ॥ ८ ॥**

| | | | |
|---|---|---|---|
| एवं | மேற்கண்டவாறு | सः | அந்த |
| सुग्रीवेण | சுக்ரீவனால் | राघवः | ஸ்ரீராமர், |
| उक्तः | வேண்டிக்கொள்ளப் பட்டவரும், | तं | அந்த |
| धर्मात्मा | தர்மாத்மாவும் | सुग्रीवं | சுக்ரீவனைப் பார்த்து |
| शत्रुसूदनः तु | சத்ருசம்ஹாரகரு மாகிய | अथ | பின்வருமாறு |
| | | वचनं उवाच | திருவாய்மலர்ந்தரு ளினார். |

**कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया । लक्ष्मणेन समुत्पाट्य यैषा कण्ठे कृता तव ॥ ९ ॥**

| | | | |
|---|---|---|---|
| लक्ष्मणेन | "லக்ஷ்மணனால் | एषा | அது, இது. |
| या | எது | अनया | இந்த |
| समुत्पाट्य | பிடுங்கி, | गजसाह्वया | கஜபுஷ்பியெனும் |
| तव | உமது | त्वं | நீர் [கொடியால் |
| कण्ठे | கழுத்தில் [றதோ ; | कृताभिज्ञानचिह्नः | அடையாளசின்னத் துடன் இருக்கின்றீர். |
| कृता | போடப்பட்டிருக்கி- | | |

**शोभसे ह्यधिकं वीर लतया कण्ठसक्तया । विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥१०॥**

| | | | |
|---|---|---|---|
| वीर | "சூரரே ! | नक्षत्रमालया | நக்ஷத்திரவரிசைக ளால் |
| कण्ठसक्तया | கழுத்திலணிந்தி ருக்கும் | इव | எவ்வண்ணமோ அவ் வண்ணமேயும் |
| लतया | கொடியால் | | |
| आकाशे | ஆகாசத்தில் | अधिकं हि | அதிகமாகவும் |
| विपरीतः सूर्यः | சந்திரன் | शोभसे | விளங்குகின்றீர். |

**अद्य वालिसमुत्थं ते भयं वैरं च वानर । एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे ॥११॥**

| | | | |
|---|---|---|---|
| वानर | "வானரரே ! | वालिसमुत्थं | வாலியினிடமிருந்து உண்டாயிருக்கும் |
| अद्य | இப்பொழுது | ते | உமது |
| संयुगे | போரில் | भयं | பயத்தையும், |
| अहं | நான், | वैरं च | துவேஷத்தையும், |
| एकेन | ஒரு | प्रमोक्ष्यामि | தொலைத்துவிடப் போகிறேன். |
| बाणमोक्षेण | பாணவீழ்ச்சியால் | | |

**मम दर्शय सुग्रीव वैरिणं भ्रातृरूपिणम् । वाली विनिहतो यावद्वने पांसुषु वेष्टते ॥ १२ ॥**

| | | | |
|---|---|---|---|
| सुग्रीव | "சுக்ரீவரே ! | यावत् | அந்த நிமிஷத்திலேயே |
| भ्रातृरूपिणं | அண்ணனென்ன உறவு மாத்திரம் கொண்டிருக்கும் | वने | காட்டில் |
| | | वाली | வாலி |
| वैरिणं | வைரியாகுமவனை | विनिहतः | அடிக்கப்பட்டு |
| मम | எனக்கு | पांसुषु | தரைப்புழுதியில் |
| दर्शय | காட்டுவீராக. | वेष्टते | இதோ புரளுவான். |

**यदि दृष्टिपथं प्राप्तो जीवन्स विनिवर्तते । ततो दोषेण माऽऽगच्छेत्सद्यो गर्हेच्च मा भवान् ॥**

| | | | |
|---|---|---|---|
| दृष्टिपथं | "கண்புலனுக்குதவே | सद्यः | உடனே |
| प्राप्तः | அடைந்தவனாக | भवान् | நீர் |
| सः हि | அவன் | मा | என்னை |
| जीवन् | உயிருடன் | गर्हेत् | நிந்தியும். |
| विनिवर्तते यदि | திரும்பிப்போய்விடுகின்றான் என்றால் | दोषेण च | என்னிடமிருக்கும் தோஷத்தால் |
| ततः | அதினால் | मा आगच्छेत् | அணுகவேண்டாம். |

**प्रत्यक्षं सप्त ते साला मया बाणेन दारिताः । तेनावेहि बलेनाद्य वालिनं निहतं मया ॥**

| | | | |
|---|---|---|---|
| ते | "அந்த | अद्य | இப்பொழுது |
| सप्त | ஏழு | तेन | அந்த |
| सालाः | ஆச்சா மரங்கள் | बलेन | சக்தியாலே |
| मया | என்னால் | मया | என்னால் |
| बाणेन | ஒரு பாணத்தால் | वालिनं | வாலியை |
| प्रत्यक्षं | உமது முன்னிலையிலே | निहतं | கொல்லப்பட்டவனாக |
| दारिताः | பிளக்கப்பட்டன. [யே | अवेहि | எண்ணும். |

**अनृतं नोक्तपूर्वं मे कृच्छ्रे महति तिष्ठता । धर्मलोभपरीतेन न च वक्ष्ये कथंचन ॥ १५ ॥**

| | | | |
|---|---|---|---|
| धर्मलोभ-परीतेन | "தர்மத்தில் ஆஸக்தியை சர்வவுமாய்கொ [ண்ட | अनृतं | பொய் |
| मे | என்னால் | न उक्तपूर्वं | இதற்குமுன்எப்பவும் சொல்லப்படவில்லை. |
| महति | பெரும் | कथंचन च | இனிமேலும் எப்பொழுதும் |
| कृच्छ्रे | கஷ்டதசையில் | | |
| तिष्ठता | இருப்பவனாகியும் | वक्ष्ये न | சொல்லமாட்டேன். |

**सफलां च करिष्यामि प्रतिज्ञां जहि संभ्रमम् । प्रसूतं कलमं क्षेत्रे वर्षेणेव शतक्रतुः ॥१६॥**

| | | | |
|---|---|---|---|
| क्षेत्रे प्रसूतं | "நிலத்தில் முளைத்த | प्रतिज्ञां | எனது பிரதிக்ஞையை |
| कलमं | செந்நெற்பயிரை | सफलां च | பூர்த்தியடைந்ததாக |
| शतक्रतुः | இந்திரன் | करिष्यामि | நான் செய்தே தீருவேன். |
| वर्षेण | மழையால் | | |
| इव | கதிர்பெறச்செய்கிறது எப்படியோ அப்படியே | संभ्रमं | மனஏக்கத்தை |
| | | जहि | ஒழியும். |

**तदाह्वाननिमित्तं त्वं वालिनो हेममालिनः । सुग्रीव कुरु तं शब्दं निष्पतेद्येन वानरः ॥**

| | | | |
|---|---|---|---|
| सुग्रीव | " சுக்ரீவரே ! | येन | எதைச் செய்தால் |
| तत् | ஆகையால் | वानरः | வானரன் (வாலி) |
| त्वं | நீர் | निष्पतेत् | வெளிக்கிளம்புவானோ |
| हेममालिनः | பொன்மாலைசூடிய | तं | அப்படிப்பட்டதாகிய |
| वालिनः | வாலியை [ணமாய் | शब्दं | கர்ஜனையை |
| आह्वाननिमित्तं | அழைகூவுதலின் கார- | कुरु | நீ போடு. |

**जितकाशी बलश्लाघी त्वया चाधर्षितः पुरा । निष्पतिष्यत्यसङ्गेन वाली स प्रियसंयुगः ॥**

| | | | |
|---|---|---|---|
| जितकाशी | " ஜயசீலனெனத் தலை கொழுத்து | अधर्षितः च | அடக்கமுடியாதிருந்த |
| बलश्लाघी | பலத்தை கொண்டாடு பவனும் | सः | அந்த [வனுமான |
| | | वाली | வாலி, |
| प्रियसंयुगः | போராசையுடையவ | असङ्गेन | உடனே |
| पुरा | இதற்குமுன் [னும் | निष्पतिष्यति | வெளிப்பட்டு வருவான். |
| त्वया | உம்மால் | | |

**रिपूणां धर्षणं शूरा मर्षयन्ति न संयुगे । जानन्तस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः ॥**

| | | | |
|---|---|---|---|
| संयुगे | " போரில் | धर्षणं | திரஸ்காரத்தை |
| स्वकं | தனது | विशेषतः | அதையும் இன்னும் விசேஷமாய் |
| वीर्यं | பராக்கிரமத்தை | | |
| जानन्तः | அறிந்த | स्त्रीसमक्षं | பெண்கள் முன்னிலையில் |
| शूराः तु | சூரர்களோவென்றால் | मर्षयन्ति न | பொறுக்கமாட்டார்கள்." |
| रिपूणां | சத்துருக்களுடைய | | |

**स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः । ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ॥**

| | | | |
|---|---|---|---|
| सः | அந்த | श्रुत्वा तु | கேட்ட பின்னர், |
| हेमपिङ्गलः | பொன்நிறமுள்ள | अम्बरं | ஆகாசத்தை |
| सुग्रीवः | சுக்ரீவன், | विनिर्भिन्दन् इव | பிளக்கின்றவன் போலாகி, |
| रामवचः | ஸ்ரீராமருடைய திரு வாக்கை | क्रूरनादेन | பெருங்குரலிட்டு |
| | | ननर्द | கர்ஜித்தான். |

**तस्य शब्देन वित्रस्ता गावो यान्ति हतप्रभाः । राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः ॥**

| | | | |
|---|---|---|---|
| तस्य | அவனது | कुलस्त्रियः इवः | குலமாதர்கள் போல |
| शब्देन | கர்ஜனையால் | वित्रस्ताः | உள்ளம் நடுங்கியவைகளாய் |
| गावः | நிலவுலகெல்லாம் | | |
| राजदोषपरामृष्टाः | ராஜதோஷத்தால் அல்லற்பட்டு | हतप्रभाः | ஒளிகுன்றியவைகளாய் |
| आकुलाः | தவிக்கும் | यान्ति | ஆயின. |

**द्रवन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः । पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥**

| | | | |
|---|---|---|---|
| मृगाः च | மிருகங்களும் | द्रवन्ति | ஓடத்தலைப்பட்டன. |
| रणे | போரில் | खगाः च | பறவைகளும் |
| भग्नाः | அடியுண்ட | क्षीणपुण्याः | புண்ணியம் குறைந்த |
| हयाः इव | குதிரைகள்போலவே | ग्रहाः इव | கிரஹங்கள்போலவே |
| शीघ्रं | விரைவில் | भूमौ | தரையில் |
| | | पतन्ति | விழுகின்றன. |

**ततः स जीमूतगणप्रणादो नादं विमुञ्चंस्त्वरया प्रतीतः ।**
**सूर्यात्मजः शौर्यविवृद्धतेजाः सरित्पतिर्वाऽनिलचञ्चलोर्मिः ॥ २३ ॥**

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | अनिल-चञ्चलोर्मिः | காற்றினுல் அசைவுண்டு சலிக்கும் அலைகளோடுகூடிய |
| सूर्यात्मजः | சூரியனின் புதல்வனுகிய | सरित्पतिः वा | சமுத்திரம்போலவே |
| सः | அவன் | शौर्य-विवृद्धतेजाः | மனவலிமையால் மலிந்த ஆற்றலுடையவனுகி |
| जीमूतगणप्रणादः | மேககணங்கள்போல் கர்ஜிக்கின்றவனுய் | | |
| त्वरया | வேகமாய் | | |
| नादं | சத்தத்தை | प्रतीतः | அதி உத்ஸாகம் கொண்டு விளங்கினுன். |
| विमुञ्चन् | இட்டுக்கொண்டு | | |

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये**
**किष्किन्धाकाण्डे चतुर्दशः सर्गः ॥**

आदितः श्लोकाः **9892** — किष्किन्धाकाण्डे आदितः श्लोकाः **640**

## पञ्चदशः सर्गः—பதினைந்தாவது ஸர்க்கம் ॥ १५ ॥

### तारोपदेशः—தாரையின் உபதேசம்.

**अथ तस्य निनादं तं सुग्रीवस्य महात्मनः । शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥**

| | | | |
|---|---|---|---|
| अथ | அப்பொழுது | सुग्रीवस्य | சுக்ரீவனுடைய |
| अन्तःपुरगतः | அந்தப்புரத்திலிருந்த | तं | அந்த |
| वाली | வாலி, | निनादं | பெருங்கோஷத்தை |
| तस्य | அந்த | अमर्षणः | ஸகிக்கமுடியாதவனுகி |
| भ्रातुः | தம்பியும் | | |
| महात्मनः | மகாத்மாவுமான | शुश्राव | கேட்டான். |

**श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् । मदश्चैकपदे नष्टः क्रोधश्चापतितो महान् ॥ २ ॥**

| | | | |
|---|---|---|---|
| तस्य | அவனது | एकपदे | ஏககாலத்தில் |
| सर्वभूतप्रकम्पनं | எல்லாப்பிராணிகளையும் நடுக்கமுறச்செய்யும் | मदः च | குடிமயக்கமும் |
| | | नष्टः | ஒழிந்தது. |
| | | महान् | பெரும் |
| निनदं | கோஷத்தை | क्रोधः च | கோபமும் |
| श्रुत्वा तु | கேட்டதுமே, | आपतितः | விளைந்தது. |

**स तु रोषपरीताङ्गो वाली सन्ध्यातपप्रभः । उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥**

| | | | |
|---|---|---|---|
| सद्यः | உடனே | सन्ध्यातपप्रभः | மாலை வெயில் ஒளி யுடையவனும் |
| सः | அந்த | उपरक्तः | கிரஹணம் பிடித்த |
| वाली तु | வாலியும், | आदित्यः | சூரியபகவான் |
| रोषपरीताङ्गः | கோபத்தால் பற்றப் பட்ட மனமுடைய வனும் | इव | போலவே |
| | | निष्प्रभतां गतः | ஒளிகுன்றியிருந்தான் |

**वाली दंष्ट्राकरालस्तु क्रोधाद्दीप्ताग्निसंनिभः । भात्युत्पतितपद्माभः समृणाल इव ह्रदः ॥**

| | | | |
|---|---|---|---|
| दंष्ट्राकरालः | கோரைபற்களால் பய ங்கரமாய்த்தோன்றும் | उत्पतितपद्माभः | பிடுங்கி எறியப்பட்ட தாமரைகளையுடைய தோற்றமுள்ளதும் |
| वाली | வாலி | समृणालः | கொடிகளுடனிருக் கிறதுமான |
| क्रोधात् | கோபாவேசத்தால் | ह्रदः इव | தாமரை ஓடைபோல் |
| दीप्ताग्नि- सन्निभः तु | கொழுந்துவிட்டெரி யும் அக்கினிபோன் றவனுகி | भाति | காணப்பட்டான். |

**शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः । वेगेन चरणन्यासैर्दारयन्निव मेदिनीम् ॥ ५ ॥**

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | मेदिनीं | பூமியை |
| हरिः | வானரன், (வாலி) | चरणन्यासैः | காலடிவெப்புகளால் |
| दुर्मर्षणं | பொறுக்கமுடியாத | दारयन् इव | பிளக்கின்றவன் |
| शब्दं | சத்தத்தை | वेगेन | விரைந்து [போலாகி |
| श्रुत्वा | கேட்டு, | निष्पपात | வெளிப்புறப்பட்டான். |

**तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा । उवाच त्रस्तसंभ्रान्ता हितोदर्कमिदं वचः ॥**

| | | | |
|---|---|---|---|
| त्रस्तसंभ्रान्ता | பயந்து உள்ளம் கலங்கிய | हितोदर्कं | நன்மையை பயக்கத் [தக்க |
| | | इदं | பின்வரும் |
| तारा | தாரை | वचः | சொல்லை |
| स्नेहात् | அன்பினுல் | तं | அவனை |
| दर्शितसौहृदा | பக்தியை வெளியிட்டுக் காட்டுகின்றவளாகி | परिष्वज्य तु | கட்டியணைத்துக்கொ [ண்டே |
| | | उवाच | சொன்னாள். |

**साधु क्रोधमिमं वीर नदीवेगमिवागतम् । शयनादुत्थितः काल्यं त्यज भुक्तामिव स्रजम् ॥**

| | | | |
|---|---|---|---|
| वीर | "நாதா! | उत्थितः | எழுந்த ஒருவன் |
| नदीवेगं | ஆற்றுப்பெருக்கை | भुक्तां | இரவில் புனைந்திருந்த |
| इव | போலவே | स्रजं | பூமாலையை |
| आगतं | பொங்கியெழுந்த | इव | எவ்வண்ணமோ அவ்வண்ணமே |
| इमं | இந்த | | |
| क्रोधं | கோபத்தை | | |
| काल्यं | அதிகாலையில் | त्यज | நீக்கிவிடும்; |
| शयनात् | படுக்கையிலிருந்து | साधु | நலம் பெறுவீர். |

**काल्यमेतेन सङ्ग्रामं करिष्यसि च वानर । वीर ते शत्रुबाहुल्यं फल्गुता वा न विद्यते ॥**

वानर “வானரரே!
एतेन இவனோடு
काल्यं நாளைக்காலை
संग्रामं करिष्यसि போரைப் புரிவீர்.
च அதனால்

वीर நாதா!
शत्रुबाहुल्यं சத்துருவுக்கு அதிகப் பெருமையாவது
ते தேவரீருக்கு
फल्गुता वा சிறுமையாவது
विद्यते न உண்டாகாது.

**सहसा तव निष्क्रामो मम तावन्न रोचते । श्रूयतां चाभिधास्यामि यन्निमित्तं निवार्यसे ॥**

तव “தேவரீரது
सहसा அவசரப்பட்டு
निष्क्रामः வெளிச்செல்கையா[னது
मम तावत् எனக்கோ
रोचते न பிடிக்கவில்லை.
यन्निमित्तं என்ன காரணமாய்

निवार्यसे தேவரீர் தடுக்கப்படுகின்றீர் என்பதை
अभिधास्यामि இதோ, விளங்க விளம்புகிறேன்;
श्रूयतां च செவிகொடுக்கப்படட்டும்.

**पूर्वमापतितः क्रोधात्स त्वामाह्वयते युधि । निष्पत्य च निरस्तस्ते हन्यमानो दिशो गतः ॥**

पूर्वं आपतितः “இதற்கு முந்திவந்து
युधि போரில்
ते தேவரீரால்
हन्यमानः புடைக்கப்பட்டு
निरस्तः தோல்வியடைந்தவனா[ய்
दिशः திக்குகளை நோக்கி

गतः ஓடிப்போய்விட்ட
सः च அவனே
निष्पत्य திரும்பிவந்து
त्वां தேவரீரை
क्रोधात् கோபத்துடன்
आह्वयते போருக்கழைக்கின்றான்.

**त्वया तस्य निरस्तस्य पीडितस्य विशेषतः । इहैत्य पुनराह्वानं शङ्कां जनयतीव मे ॥**

त्वया “தேவரீரால்
विशेषतः விசேஷமாய்
पीडितस्य ஹிம்ஸிக்கப்பட்டு
निरस्तस्य தோல்வியடைந்து
इह एत्य இங்கு வந்து
पुनः மீளவும்

तस्य அவனது
आह्वानं போருக்கழைத்த[லானது
मे எனக்கு
इव இப்படிப்பட்டதென சொல்லமுடியாத
शङ्कां மனக்குழப்பத்தை
जनयति உண்டுபண்ணுகிறது.

**दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः । निनादस्य च संरम्भो नैतदल्पं हि कारणम् ॥**

नर्दतः “பெருங்கூசலிடும்
तस्य அவனது
यादृशः இப்படிப்பட்டதாகிய
दर्पः அவமரியாதையான நடத்தை
अल्पं न அசட்டைசெய்யத் தக்கதன்று.
व्यवसायः { யுத்தவியாபாரங்களில் செய்யும் கடபோபாயம்

च அப்படியே அசட்டைசெய்யத்தக்கதன்று.
निनादस्य பேரிரச்சலின்
संरम्भः முழுக்கமும்
च அப்படியே அசட்டைசெய்யத்தக்கதன்று.
एतत् அப்பொழுதிய
कारणं செய்கை
च அப்படியே அசட்டைசெய்யத்தக்கதன்று
हि இது திண்ணம்.

**नासहायमहं मन्ये सुग्रीवं तमिहागतम् । अवष्टब्धसहायश्च यमाश्रित्यैष गर्जति ॥ १३ ॥**

| | |
|---|---|
| इह | " இப்பொழுது |
| आगतं | இவ்விடம் வந்துசேர்ந் |
| तं | அந்த [திருக்கும் |
| सुग्रीवं | சுக்ரீவனை |
| असहायं | துணையாளனுடனில் |
| अहं | நான் [லாதவனாக |
| मन्ये न | எண்ணவில்லை. |
| एषः | இவன் |
| यं | எவனை ஒருவனை |
| आश्रित्य | தஞ்சமாயடைந்து, |
| अवष्टब्ध-सहायः च | துணையாளனால் கை கொடுத்து காக்கப் பட்டவனாகவே |
| गर्जति | பெருங்கூச்சலிடுகின் றான். |

**प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः । अपरीक्षितवीर्येण सुग्रीवः सह नैष्यति ॥ १४ ॥**

| | |
|---|---|
| प्रकृत्या | " இயற்கையாகவே |
| बुद्धिमान् च | புத்திமானும் |
| निपुणः एव | சாமர்த்தியசாலியும் |
| वानरः च | வானரனுமான |
| सुग्रीवः | சுக்ரீவன் |
| अपरीक्षितवीर्येण | வன்மைபரீக்ஷிக்கறிய ப்படாத ஒருவனோடு |
| सह एव | கூடவேயென்றால் |
| एष्यति न | வரமாட்டான். |

**पूर्वमेव मया वीर श्रुतं कथयतो वचः । अङ्गदस्य कुमारस्य वक्ष्यामि त्वा हितं वचः ॥**

| | |
|---|---|
| वीर | " நாதா ! |
| पूर्वं एव | இதற்குமுந்தியே |
| कथयतः | பல விஷயங்களை பேசிக்கொண்டிருந்த |
| कुमारस्य | குமாரனாகிய |
| अङ्गदस्य | அங்கதனது |
| वचः | சொல் ஒன்று |
| मया | என்னால் [கிறது. |
| श्रुतं | கேட்கப்பட்டிருக்- |
| हितं | நன்மையை விளைவிக் கும் |
| वचः | சொல்லாகிய இதை |
| त्वा | தேவரீருக்கு |
| वक्ष्यामि | சொல்லுகிறேன். |

**अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः । प्रवृत्तिस्तेन कथिता चारैराप्तैर्निवेदिता ॥१६॥**
**अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ । इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ ॥**
**सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ ॥ १७ ॥**

| | |
|---|---|
| अयं | " இந்த |
| कुमारः | குமாரனாகிய |
| अङ्गदः | அங்கதன் |
| वनान्तं | காட்டினுள் |
| उपनिर्गतः | போயிருந்தான் ; |
| अयोध्याधिपतेः | ' அயோத்திமன்ன |
| पुत्रौ | புதல்வர்களும் [ரின் |
| शूरौ | சூரர்களும் |
| समरदुर्जयौ | போரில் வெல்லுதற்க ரியவர்களும் |
| इक्ष्वाकूणां | இக்ஷ்வாகுக்களுடைய |
| कुले | குலத்தில் |
| जातौ | பிறந்தவர்களும் |
| दुरासदौ | ஒப்புயர்வில்லாதவர் களும் |
| रामलक्ष्मणौ | ஸ்ரீராமர் லக்ஷ்மணர் |
| प्रथितौ | பிரசித்திபெற்ற [என வருமான இருவர்கள் |
| सुग्रीवप्रियकामार्थं | சுக்ரீவருக்கு ஹிதத் தை செய்யவேண்டி |
| तत्र | அவ்விடத்தில் |
| प्राप्तौ | வந்திருக்கின்றார்கள் ' |
| आप्तैः | நண்பர்களான [என்ற |
| चारैः | ஏவாட்களால் |
| कथिता | தெரிவிக்கப்பட்ட |
| प्रवृत्तिः | தற்காலச்செய்தியா |
| तेन तु | இவனாலேயே [னது |
| निवेदिता | எனக்கு சொல்லப் பட்டது. |

**तव भ्रातुर्हि विख्यात: सहायो रणकर्कश: । राम: परबलामर्दी युगान्ताग्निरिवोत्थित: ॥**

| | | | |
|---|---|---|---|
| तव | "தேவரீரது | परबलामर्दी | சத்துருவினாற்றலை அடியோடொழிப்பவர்; |
| भ्रातु: | தம்பியினது | युगान्ताग्नि: | ஊழித்தீ |
| सहाय: हि | துணையாளரன்றோ | इव | போலவே |
| विख्यात: | திரிலோகப்பிரசித்தி பெற்ற | उत्थित: | உத்பவித்தவர். |
| राम: | ஸ்ரீராமர்; | | |
| रणकर्कश: | போரில் பராக்கிரமத்தின் எல்லைகண்டறியப்படமுடியாதவர்; | | |

**निवासवृक्ष: साधूनामापन्नानां परा गति: । आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ॥**

| | | | |
|---|---|---|---|
| साधूनां | "புண்யாத்மாக்களை | गति: च | புகலிடம்; |
| निवासवृक्ष: | காத்தருளும் கற்பகம்; | आर्तानां | திக்கற்றவர்களுக்கு |
| आपन्नानां | இடருற்றவர்களுக்கு | संश्रय: एव | ரக்ஷகர்; |
| परा | எதிலும் மேம்பட்ட | यशस: च | புகழுக்கு |
| | | एकभाजनं | உரிய பாத்திரம். |

**ज्ञानविज्ञानसंपन्नो निदेशे निरत: पितु: । धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ॥**

| | | | |
|---|---|---|---|
| ज्ञानविज्ञान-संपन्न: | "பரமாத்மஜ்ஞானத்திலும் மற்றுமுள்ள அறிவிலும் நிபுணர்; | शैलेन्द्र: | ஹிமவான் |
| पितु: | தந்தையினது | इव | எப்படியோ அப்படியே |
| निदेशे | ஆக்ஞையில் | गुणानां | திருக்கல்யாண குணங்களின் |
| निरत: | அசஞ்சலபக்தியுடையவர்; | महान् | சர்வோத்கிருஷ்டமாகிய |
| धातूनां | தாதுக்களுக்கு | आकर: | சுரங்கம். |

**तत्क्षमं न विरोधस्ते सह तेन महात्मना । दुर्जयेनाप्रमेयेन रामेण रणकर्मसु ॥ २१ ॥**

| | | | |
|---|---|---|---|
| तत् | "ஆகையால் | महात्मना | மகாத்மாவுமாகிய |
| रणकर्मसु | போர்த்தொழில்களில் | तेन | அந்த |
| अप्रमेयेन | அறிவிற்கெட்டாதவரும் | रामेण | ஸ்ரீராமரோடு |
| दुर्जयेन | எப்படிப்பட்டவனும் வெல்லமுடியாதவரும் | सह | கூட |
| | | ते | தேவரீருக்கு |
| | | विरोध: | விரோதமென்பது |
| | | क्षमं न | யுக்தமன்று. |

**शूर वक्ष्यामि ते किंचिन्न चेच्छाम्यभ्यसूयितुम् । श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम् ॥**

| | | | |
|---|---|---|---|
| शूर | "சூரரே! | यत् | எதொன்று |
| ते | தேவரீருக்கு | हितं च एव | நியாயமானதோ அதையே |
| किंचित् | ஒன்றை | वक्ष्यामि | சொல்லுகிறேன். |
| वक्ष्यामि | உரைக்கப்போகிறேன் | श्रूयतां | செவிகொடுத்து கேட்கப்படட்டும் |
| अभ्यसूयितुं च | சினமூட்டுவதற்கோ | क्रियताम् | திருவுளப்படி முடிக்கப்படட்டும். |
| इच्छामि न | நான் துணிவுறேன். | | |
| तव | தேவரீருக்கு | | |

**यौवराज्ये तु सुग्रीवं तूर्णं साध्वभिषेचय । विग्रहं मा कृथा वीर भ्रात्रा राजन्बलीयसा ॥**

| | | | |
|---|---|---|---|
| वीर | "நாதா! | राजन् | அரசே! |
| बलीयसा | தக்க துணையைப் பெற்றுவிட்ட | सुग्रीवं तु | சுக்ரீவரையே |
| | | तूर्णं | தக்ஷணமே |
| भ्राता | தம்பியோடு | साधु | மனமுவந்து |
| विग्रहं | போர் | यौवराज्ये | இளவரசில் |
| मा कृथाः | புரியாதீர். | अभिषेचय | முடிசூட்டிவையும். |

**अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् । सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ॥**

| | | | |
|---|---|---|---|
| अहं हि | "அடியாளோ, | दूरतः | உள்ளத்திலில்லாதபடி |
| तेन रामेण | அந்த ஸ்ரீராமருடன் | उत्सृज्य | விட்டொழித்து |
| सौहृदं | நட்புபெற்றிருத்தலை | सुग्रीवेण | சுக்ரீவரோடு |
| ते | தேவரீருக்கு | संप्रीतिं | அன்பார்ந்த வாத்ஸல்யமாயிருத்தலையும் |
| क्षमं | ஏற்றதென | | |
| मन्ये | எண்ணுகிறேன் | च | தேவரீருக்கு ஏற்றதென் எண்ணுகிறேன். |
| वैरं | த்வேஷத்தை | | |

**लालनीयो हि ते भ्राता यवीयानेष वानरः । तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते ॥**

| | | | |
|---|---|---|---|
| एषः वानरः | "இந்த வானரர் | तत्र सन् वा | தூரத்திலிருந்தாலும் |
| ते | தேவரீருக்கு | इहस्थः वा | பக்கலிலிருந்தாலும் |
| यवीयान् भ्राता | தம்பி. | सर्वथा | எப்படியும் [அவர் |
| हि | ஆனதால் | ते | தேவரீருக்கு |
| लालनीयः | கூடி குலாவப்பட வேண்டியவர். | बन्धुः एव | கூடப்பிறந்தவரே. |

**न हि तेन समं बन्धुं भुवि पश्यामि कंचन । दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् ॥**

| | | | |
|---|---|---|---|
| हि | "ஆனபடியால் | पश्यामि न | நான் அறிந்திலேன். |
| भुवि | இவ்வுலகில் | दानमानादि-सत्कारैः | ரக்ஷித்தல் கௌரவித்தல் முதலிய அனுசரணைகளால் |
| तेन | அவரோடு | | |
| समं | சமமாகிய | प्रत्यनन्तरं | ஸ்வாதீனத்திலிருப்பவராக |
| बन्धुं | பந்துவாகிற | | |
| कंचन | வேறொருவனை | कुरुष्व | செய்துகொள்ளும். |

**वैरमेतत्समुत्सृज्य तव पार्श्वे स तिष्ठतु । सुग्रीवो विपुलग्रीवस्तव बन्धुः सदा मतः ॥२७॥**

| | | | |
|---|---|---|---|
| सः | "அவர் | विपुलग्रीवः | நீண்ட கழுத்தை [யுடைய |
| एतत् | இந்த | सुग्रीवः | சுக்ரீவர் |
| वैरं | த்வேஷத்தை | सदा | எக்காலத்திலும் |
| समुत्सृज्य | விட்டொழித்து | तव | தேவரீருக்கு |
| तव | தேவரீரது | बन्धुः | உற்றதுணையவரென |
| पार्श्वे | பக்கலில் | मतः | என்னால் நினைக்கப்பட்டவர். |
| तिष्ठतु | இருக்கட்டும். | | |

**भ्रातुः सौहृदमालम्ब नान्या गतिरिहास्ति ते ॥ २८ ॥**

| | | | |
|---|---|---|---|
| भ्रातुः | " தம்பியினிடம் | इह | இப்பொழுது |
| सौहृदं | நட்பை. | ते | தேவரீருக்கு |
| आलम्ब | மேற்கொள்ளும்; | अन्या | வேறு |
| | | गतिः अस्ति न | கதி இல்லை. |

**यदि ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् । याच्यमानः प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥**

| | | | |
|---|---|---|---|
| ते | " தேவரீருக்கு | अवैषि | அறிந்திருக்கின்றீர் |
| मत्प्रियं | எனக்கிஷ்டமானது | यदि | என்றாலும் |
| कार्यं | செய்யத்தக்கது | याच्यमानः | பிரார்த்திக்கப்படும் |
| यदि | என்றாலும் | मे | அடியாளது [தேவரீர் |
| मां | அடியாளை | वाक्यं | விண்ணப்பத்தை |
| हितां च | நலங்கருதுபவளா | प्रयत्नेन | பெரியமனதுசெய்து |
| | கவும் | कुरुष्व | ஏற்றருளும். |
| | | साधु | நலம் காண்பீர். |

**प्रसीद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि ।**
**क्षमो हि ते कोसलराजसूनुना न विग्रहः शक्रसमानतेजसा ॥ ३० ॥**

| | | | |
|---|---|---|---|
| प्रसीद | " திருவுளமுவந்தரு | अर्हसि न | கூடாது. |
| मे | எனது [ளும். | हि | ஏனெனில் |
| पथ्यं | ஹிதமான | शक्रसमानतेजसा | இந்திரனை நிகர்த்த |
| जल्पितं | மொழியை | | ஆற்றலுடைய |
| शृणु | கேளும். | ते | தேவரீருக்கு |
| रोषं | கோபத்தை | कोसलराजसूनुना | கோசலக்கோமான் |
| अनुविधातुं एव | விடாது பற்றியவண் | विग्रहः | போர் [கோமகனோடு |
| | ணமேயிருக்க | क्षमः न | யுக்தமன்று; |
| | | हि | இது திண்ணம்." |

**तदा हि तारा हितमेव वाक्यं तं वालिनं पथ्यमिदं बभाषे ।**
**न रोचते तद्वचनं हि तस्य कालाभिपन्नस्य विनाशकाले ॥ ३१ ॥**

| | | | |
|---|---|---|---|
| तदा | அப்பொழுது | वाक्यं | சொல்லை |
| तारा हि | தாரையோ | बभाषे | சொன்னாள். |
| तं | அந்த | विनाशकाले | அழிவுகாலத்தில் |
| वालिनं | வாலிக்கு | कालाभिपन्नस्य | காலன்கையகப்பட்ட |
| इदं | மேற்கண்ட | तस्य हि | அவனுக்கோவென் |
| हितं | நியாயமாயிருக்கிறதும் | | றால் |
| पथ्यं एव | க்ஷேமகரமாயிருக்கின் | तद्वचनं | அச்சொல் |
| | றதுமான | न रोचते | மனதிற்புகவில்லை. |

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये**
**किष्किन्धाकाण्डे पञ्चदशः सर्गः ॥**

आदितः श्लोकाः 9923 किष्किन्धाकाण्डे आदितः श्लोकाः 671



## षोडशः सर्गः — பதினாறுவது ஸர்க்கம் ॥ १६ ॥

### वालिवधः—வாலிவதம்

**तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् । वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥**

| | | | |
|---|---|---|---|
| वाली | வாலி | तारां | தாரையை |
| एवं | மேற்கண்டவாறு | निर्भर्त्सयामास | அதட்டினான். |
| ब्रुवतीं | பேசிக்கொண்டிருக்கும் | तां | அவளைப்பார்த்து |
| | | इदं | பின்வரும் |
| ताराधिपनिभाननां | சந்திரனைப்போன்ற முகமுடைய | वचनं च | சொல்லையும் |
| | | अब्रवीत् | சொன்னான். |

**गर्जतोऽस्य सुसंरब्धं भ्रातुः शत्रोर्विशेषतः । मर्षयिष्याम्यहं केन कारणेन वरानने ॥२॥**

| | | | |
|---|---|---|---|
| वरानने | "ஆரணங்கே! | सुसंरब्धं | ஆர்வாரத்தை |
| भ्रातुः | தம்பியும் | अहं | நான் |
| गर्जतः | உறுமி கர்ஜிக்கின்ற | केन | எந்த |
| विशेषतः | அதிலும் [வனும் | कारणेन | காரணத்தைக் கொண்டு |
| शत्रोः | சத்ருவுமான | | |
| अस्य | இவனுடைய | मर्षयिष्यामि | சகிப்பேன்? |

**अधर्षितानां शूराणां समरेष्वनिवर्तिनाम् । धर्षणामर्षणं भीरु मरणादतिरिच्यते ॥ ३ ॥**

| | | | |
|---|---|---|---|
| भीरु | "பயந்தவளே! | धर्षणामर्षणं | அவமானத்தை சகித்தலென்பது |
| समरेषु | போரில் | | |
| अनिवर्तिनां | புறமுதுகிட்டோடா | मरणात् | மரணத்தைக்காட்டிலும் |
| अधर्षितानां | தோல்வியடையாத [து | | |
| शूराणां | சூரர்களுக்கு | अतिरिच्यते | அதிக கஷ்டமானது. |

**सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे । सुग्रीवस्य च संरम्भं हीनग्रीवस्य गर्जतः ॥४॥**

| | | | |
|---|---|---|---|
| युद्धकामस्य | "போரைக்கோரி | संरम्भं च | ஆர்ப்பரித்தலை |
| गर्जतः | கர்ஜிக்கும் | संयुगे | போரில் |
| हीनग्रीवस्य | கோணக்கழுத்தனாகிய | सोढुं | பொறுக்க |
| सुग्रीवस्य | சுக்ரீவனுடைய | अहं च | நான் மட்டும் |
| | | समर्थः न | உடன்பட்டவனாகேன். |

**न च कार्यो विषादस्ते राघवं प्रति मत्कृते । धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥५॥**

| | | | |
|---|---|---|---|
| मत्कृते | "என் விஷயத்தில் | धर्मज्ञः च | தர்மங்களை உள்ளபடியறிந்தவரும் |
| राघवं प्रति | ராகவரை நினைத்து | | |
| ते | உனக்கு | कृतज्ञः च | சதா தர்மானுஷ்டானமுடையவருமான அவர் |
| विषादः च | கவலை என்பதே | पापं | தகாத காரியத்தை |
| कार्यः न | கொள்ளத்தக்கதன்று. | कथं करिष्यति | எங்ஙனம் புரிவார்? |

**कस्येमे काञ्चना वृक्षास्तरुणादित्यसन्निभाः । इमे जाम्बूनदमयाः पादपाः कस्य तेजसा ॥**
**शुचीन्यभ्यवहार्याणि मूलानि च फलानि च । काञ्चनानि विमानानि राजतानि गृहाणि च ॥**
**तपनीयगवाक्षाणि मणिजालावृतानि च । काञ्चनानि च पद्मानि जातानि विमले जले ॥**

| | |
|---|---|
| तरुणादित्यसन्निभाः | "உதித்த ஸூர்யனுக்கு நிகரான |
| इमे | இந்த |
| काञ्चनाः | ப்ரகாசிக்கும் |
| वृक्षाः | மரங்கள் |
| कस्य | யாருடையன ? |
| च | மேலும், |
| इमे | இந்த |
| जाम्बूनदमयाः | தங்கத்தால் செய்யப்பட்ட |
| पादपाः | விருக்ஷங்களும் |
| शुचीनि | பரிசுத்தங்களான |
| अभ्यवहार्याणि | உணவிற்குரியனவான |
| मूलानि च | கிழங்குகளும், |
| फलानि च | பழங்களும் |
| काञ्चनानि | பொன்மயமான |
| विमानानि | விமானங்களும் |
| मणिजालावृतानि | இரத்தின வலைகள் கட்டின |
| तपनीय- गवाक्षाणि | கண்களைப் பறிக்கக் கூடிய காந்தி பொருந்திய பொற்பலகணிகளையுடைய |
| राजतानि | வெள்ளிமயமான |
| गृहाणि च | வீடுகளும் |
| विमले | நிர்மலமான |
| जले | ஜலத்தில் |
| काञ्चनानि | பொன்மயமான |
| पद्मानि च | தாமரைகளும், |
| कस्य | யாருடைய |
| तेजसा | தெய்வசக்தியால் |
| जातानि | உண்டாயின ! |

**कथं मत्स्याश्च सौवर्णाश्चरन्ति सह कच्छपैः ॥ ७ ॥**

| | |
|---|---|
| कच्छपैः सह | ஆமைகளோடு |
| मत्स्याः च | மீன்களும் |
| सौवर्णाः | பொன்மயமாகி |
| कथं | எப்படி |
| चरन्ति | ஸஞ்சரிக்கின்றன. |

**आत्मानमनुभावं च कस्य चैतत्तपोबलम् । अजानतां नः सर्वेषां सर्वमाख्यातुमर्हसि ॥ ८ ॥**

| | |
|---|---|
| एतत् | இது |
| कस्य | யாருடைய |
| तपोबलं | தபோபலம். |
| आत्मानं च | உங்களையும் |
| अनुभावं च | மஹிமையையும் |
| अजानतां | தெரியாதவர்களான |
| नः | எங்கள் |
| सर्वेषां | எல்லோருக்கும் |
| सर्वं | எல்லாவற்றையும் |
| आख्यातुं अर्हसि | விவரித்துச் சொல்ல வேண்டும். |

**एवमुक्ता हनुमता तापसी धर्मचारिणी । प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ॥ ९ ॥**

| | |
|---|---|
| सर्वभूतहिते | "எல்லா ப்ராணிகளின் நன்மையிலேயே |
| रता | ஆஸக்தியை உடையவளான |
| धर्मचारिणी | தர்மானுஷ்டானமுள்ளவளான |
| तापसी | தபஸ்வீ |
| हनुमता | ஹனுமாரினால் |
| एवं | இப்படி |
| उक्ता | வினவப்பட்டவளாய் |
| हनूमन्तं | ஹனுமாரைப் பார்த்து |
| प्रत्युवाच | பின்வருமாறு பதில் உரைத்தனள். |

**मयो नाम महातेजा मायावी दानवर्षभः । तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ॥१०॥**

| | | | |
|---|---|---|---|
| दानवर्षभः | "அசுரசிரேஷ்டனான | इदं | இந்த |
| मयः नाम | மயனென்பவன் | काञ्चनं | பொன்மயமான |
| महातेजाः | மஹாதேஜஸ்வி. | वनं | காடு |
| मायावी | மாயைகளில் வல்லவன். | सर्वं | மற்றுமுள்ள எல்லாம் |
| | | मायया | மாயையினாலேயே |
| तेन | அவனால் | निर्मितम् | ஸ்ருஷ்டிக்கப்பட்டது. |

**पुरा दानवमुख्यानां विश्वकर्मा बभूव ह । येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् ॥११॥**

| | | | |
|---|---|---|---|
| पुरा | "முன்பு | येन | எவனாலோ அவன் |
| इदं | இந்த | दानवमुख्यानां | சிறந்த அரக்கர்களுக்கெல்லாம் |
| काञ्चनं | பொன்மயமான | | |
| दिव्यं | தேவர்களுக்குரிய | | |
| भवनोत्तमं | சிறந்த மாளிகை | विश्वकर्मा | விசுவகர்மாவாக |
| निर्मितं | ஸ்ருஷ்டிக்கப்பட்டது. | बभूव ह | ஆனான். |

**स तु वर्षसहस्राणि तपस्तप्त्वा महावने । पितामहाद्वरं लेभे सर्वमौशनसं धनम् ॥ १२ ॥**

| | | | |
|---|---|---|---|
| सः | "அவன் | | |
| महावने | பெருங்கானில் | औशनसं | உசனஸ் என்பவரால் செய்யப்பட்ட சிற்ப சாஸ்திரக்கல்வியாகிற |
| वर्षसहस्राणि | ஆயிரம் வருஷங்கள் | | |
| तपः | தவத்தை | धनं | சிறந்தபொக்கிஷத்தை |
| तप्त्वा | இயற்றி, | सर्वं तु | எல்லாவற்றையும் |
| पितामहात् | பிரம்மதேவரிடமிருந்து | वरं | வரமாக |
| | | लेभे | அடைந்தான். |

**वनं विधाय बलवान्सर्वकामेश्वरस्तदा । उवास सुखितः कालं कञ्चिदस्मिन्महावने ॥१३॥**

| | | | |
|---|---|---|---|
| बलवान् | "சக்திபெற்றவனாய் | तदा | அப்பொழுது |
| सर्वकामेश्वरः | எல்லா போகங்களுக்கும் ஈசுவரனாய் | विधाय | ஏற்படுத்திக்கொண்டு |
| अस्मिन् | இந்த | कञ्चित् कालं | கொஞ்ச காலம் |
| महावने | பெருங்கானில் | सुखितः | இன்பமுற்றவனாய் |
| वनं | இருப்பிடத்தை | उवास | வாழ்ந்தான். |

**तमप्सरसि हेमायां सक्तं दानवसत्तमम् । विक्रम्यैवाशनिं गृह्य जघानेशः पुरन्दरः ॥ १४ ॥**

| | | | |
|---|---|---|---|
| दानवसत्तमं | "அசுரச்ரேஷ்டனை | पुरन्दरः | இந்திரன் |
| हेमायां | ஹேமை என்ற | गृह्य | அறிந்துகொண்டு, |
| अप्सरसि | தெய்வப்பெண்ணின் மேல் | अशनिं एव | வஜ்ராயுதத்தையே |
| | | विक्रम्य | ஆரோபித்து, |
| सक्तं | ஆசைகொண்டவனாக | तं | அவனை |
| ईशः | த்ரிலோகாதிபதியான | जघान | கொன்றார். |

**इदं च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् । शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयम् ॥ १५ ॥**

| | | | |
|---|---|---|---|
| इदं | “இந்த | शाश्वताः | எல்லா |
| हिरण्मयं | பொன்மயமான | कामभोगाः च | காமபோகங்களும் |
| गृहं च | வீடும் | ब्रह्मणा | பிரம்மாவினால் |
| इदं | இந்த | हेमायै | ஹேமைக்கு |
| उत्तमं | உத்தமமான | दत्तम् | கொடுக்கப்பட்டது. |
| वनं च | சோலையும், | | |

**दुहिता मेरुसावर्णेरहं तस्याः स्वयंप्रभा । इदं रक्षामि भवनं हेमाया वानरोत्तम ॥ १६ ॥**

| | | | |
|---|---|---|---|
| वानरोत्तम | “வானர சிரேஷ்டரே ! | तस्याः | இந்த |
| अहं | நான் | हेमायाः | ஹேமையினுடைய |
| मेरुसावर्णेः | மேருஸாவர்ணியின் | इदं | இந்த |
| स्वयंप्रभा | ஸ்வயம்ப்ரபை என்ற | भवनं | மாளிகையை |
| दुहिता | பெண் ; | रक्षामि | காத்துக்கொண்டிருக்கிறேன். |

**मम प्रियसखी हेमा नृत्तगीतविशारदा । तया दत्तवरा चास्मि रक्षामि भवनोत्तमम् ॥ १७ ॥**

| | | | |
|---|---|---|---|
| नृत्तगीतविशारदा | “நர்த்தனம் கீதம் இவற்றில் வல்லவளான | दत्तवरा अस्मि | கேட்டுக்கொள்ளப்பட்டவளாக ஆனேன். |
| हेमा | ஹேமை | च | அதனால் |
| मम | எனது | भवनोत्तमं | அழகான மாளிகையை |
| प्रियसखी | உயிர்த் தோழி. | रक्षामि | காத்துக்கொண்டிருக்கிறேன். |
| तया | அவளாலே | | |

**किं कार्यं कस्य वा हेतोः कान्ताराणि प्रपद्यथ । कथं चेदं वनं दुर्गं युष्माभिरुपलक्षितम् ॥**

| | | | |
|---|---|---|---|
| किं | “என்ன | कथं च | எப்படித்தான் |
| कार्यं | காரியம் ? | इदं | இந்த |
| कस्य | எவனுடைய | दुर्गं | நுழைவதற்கரிய |
| हेतोः वा | நிமித்தமாய் | वनं | காடு |
| कान्ताराणि | காடுகளை | युष्माभिः | உங்களால் |
| प्रपद्यथ | சுற்றிச்சுற்றிப் பார்க்கிறீர்கள் ? | उपलक्षितम् | கண்டுபிடிக்கப்பட்டது ? |

**इमान्यभ्यवहार्याणि मूलानि च फलानि च । भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हथ ॥**

| | | | |
|---|---|---|---|
| इमानि | “இந்த | पीत्वा | பருகி |
| अभ्यवहार्याणि | உண்ணத் தகுந்த | सर्वं | எல்லாவற்றையும் |
| मूलानि च | கிழங்குகளையும் | च | நிச்சயமாய் |
| फलानि च | பழங்களையும் | मे | எனக்கு |
| भुक्त्वा | புசித்து, | वक्तुं | சொல்ல |
| पानीयं | பருகத் தகுந்ததையும் | अर्हथ | கடவீர்கள்”. |

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकपञ्चाशः सर्गः ॥**

आदितः श्लोकाः 11349  किष्किन्धाकाण्डे आदितः श्लोकाः 2097

द्विपञ्चाशः सर्गः—ஐம்பத்திரண்டாவது ஸர்க்கம் ॥ ५२ ॥

बिलप्रवेशकारणकथनम्—குகையினுள் வந்த காரணத்தைச் சொல்வது.

अथ तानब्रवीत्सर्वान्विश्रान्तान् हरियूथपान् । इदं वचनमेकाग्रा तापसी धर्मचारिणी ॥१॥

| | | | |
|---|---|---|---|
| एकाग्रा | ஒருப்பட்ட மனத்தை யுடையவளாய் | तान् | அந்த |
| धर्मचारिणी | தர்மநெறியில் நடப்பவளான | सर्वान् | எல்லா |
| तापसी | தாபஸி | हरियूथपान् | வானரோத்தமர்களை |
| विश्रान्तान् | விச்ராந்தியடைந்த | इदं | இனி வரப்போகிற |
| | | वचनं अथ | சொல்லையும் |
| | | अब्रवीत् | சொன்னாள். |

वानरा यदि वः खेदः प्रनष्टः फलभक्षणात् । यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यताम् ॥

| | | | |
|---|---|---|---|
| वानराः | "வானரர்காள்! | एतत् | இது |
| फलभक्षणात् | பழம் சாப்பிட்டதால் | मया | என்னால் |
| वः | உங்களுடைய | श्राव्यं | கேட்கத்தகுந்ததாக |
| खेदः | களைப்பு | यदि च | இருக்கும்பக்ஷத்தில் |
| प्रनष्टः | தீர்ந்துவிட்டதாக | श्रोतुं | அறிந்துகொள்ள |
| यदि | ஆகில் | इच्छामि | விரும்புகிறேன்; |
| | | कथ्यताम् | சொல்லுங்கள்." |

तस्यास्तद्वचनं श्रुत्वा हनुमान्मारुतात्मजः । आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ॥ ३ ॥

| | | | |
|---|---|---|---|
| तस्याः | அவளது | हनुमान् | ஹனுமார் |
| तत् | அந்த | आर्जवेन | அடக்கமாய் |
| वचनं | சொல்லை | यथातत्त्वं | உள்ளபடி |
| श्रुत्वा | கேட்டு, | आख्यातुं | சொல்ல |
| मारुतात्मजः | வாயுகுமாரராகிய | उपचक्रमे | தொடங்கினார். |

राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः । रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥ ४ ॥

| | | | |
|---|---|---|---|
| सर्वस्य | "எல்லா | रामः | ஸ்ரீராமர், |
| लोकस्य | உலகத்திற்கும் | भ्रात्रा | உடன்பிறந்தவரான |
| राजा | அரசரான | लक्ष्मणेन सह च | லக்ஷ்மணரோடும் |
| महेन्द्रवरुणोपमः | இந்திரனையும் வருணனையும் ஒத்த | वैदेह्या | விதேஹதேசமன்னரின் பெண்ணான |
| दाशरथिः | தசரதகுமாரராகிய | भार्यया अपि | மனைவியோடும் |
| श्रीमान् | ஸ்ரீமானான | दण्डकावनं | தண்டகவனத்திற்கு |
| | | प्रविष्टः | வந்தார். |

**तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ५ ॥**

| | | | |
|---|---|---|---|
| तस्य | "அவருடைய | रावणेन | ராவணனால் |
| भार्या | மனைவி | बलात् | நிர்ப்பந்தமாய் |
| जनस्थानात् | ஜனஸ்தானத்திலிருந்து | हृता | திருடிக்கொண்டு போகப்பட்டாள். |

**वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः । राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥**

| | | | |
|---|---|---|---|
| सुग्रीवः नाम | "சுக்ரீவர் என்ற | वानरमुख्यानां | வானரச்ரேஷ்டர்களுக்கு |
| वानरः | வானர | | |
| वीरः | வீரர் | राजा | அரசர். |
| तस्य | அந்த | येन | அவரால் |
| राज्ञः | அரசருக்கு | वयं | நாங்கள் |
| सखा | அன்பர். | प्रस्थापिताः | அனுப்பப்பட்டவர்கள். |

**अगस्त्यचरितामाशां दक्षिणां यमरक्षिताम् । सहैभिर्वानरैर्मुख्यैरङ्गदप्रमुखैर्वयम् ॥ ७ ॥**
**रावणं सहिताः सर्वे राक्षसं कामरूपिणम् । सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥**

| | | | |
|---|---|---|---|
| एभिः | "இந்த | कामरूपिणं | நினைத்த உருவமெடுக்கவல்ல |
| अङ्गदप्रमुखैः | அங்கதனைத் தலைமையாகவுடைய | रावणं | ராவணனென்ற |
| मुख्यैः | பிரதானமான | राक्षसं | ராக்ஷதனையும் [று |
| वानरैः | வானரர்களோடு | मार्गध्वं इति | தேடக்கடவீர்களென்- |
| सह | கூட | अगस्त्यचरितां | அகஸ்தியர் வசிப்பதாயும் |
| वयं | நாங்கள் | | |
| सर्वे | எல்லோரும் | यमरक्षितां | யமனது காவலிலுள்ளதுமான |
| सहिताः | ஒன்றுசேர்ந்தவர்களாய் | दक्षिणां | தென் |
| वैदेह्या | விதேக மன்னரின் பெண்ணான | आशां | திக்குக்கு |
| | | चोदिताः | ஆக்ஞாபிக்கப்பட்டவர்கள். |
| सीतया सह | ஸீதையோடுகூட | | |

**विचित्य तु वयं सर्वे समग्रां दक्षिणां दिशम् । बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिताः ॥**

| | | | |
|---|---|---|---|
| वयं | "நாங்கள் | बुभुक्षिताः | பசிகொண்டவர்களாய் |
| सर्वे | எல்லோரும் | परिश्रान्ताः | மிகக் களைத்தவர்களாய் |
| दक्षिणां | தென் | | |
| दिशं | திசையை | तु | இந்த ஸ்திதியில் |
| समग्रां | முழுவதையும் | वृक्षमूलं | ஒரு மரத்தினடியை |
| विचित्य | தேடி | उपाश्रिताः | அடைந்தோம். |

**विवर्णवदनाः सर्वे सर्वे ध्यानपरायणाः । नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ १० ॥**

| | | | |
|---|---|---|---|
| सर्वे | எல்லோரும் | चिन्तामहार्णवे | கவலைப் பெருங்கடலில் |
| विवर्णवदनाः | முகம் வாடினவர்களாக ஆனோம். | मग्नाः | மூழ்கினவர்களாய் |
| सर्वे | எல்லோரும் | पारं | முடிவை |
| ध्यानपरायणाः | சிந்தை மேலிட்டவர்களாக ஆனோம். | अधिगच्छामहे न | காணாதிருந்தோம். |

**चारयन्तस्ततश्चक्षुर्दृष्टवन्तो वयं बिलम् । लतापादपसंच्छन्नं तिमिरेण समावृतम् ॥ ११ ॥**

| | | | |
|---|---|---|---|
| चक्षुः | " கண்களை | लतापादपसंच्छन्नं | கொடிகளாலும் மரங்களாலும் சூழப்பட்ட |
| चारयन्तः | அங்குமிங்கும் செலுத்திய | तिमिरेण | இருளால் |
| | | समावृतं | நிறைந்துள்ள |
| वयं | நாங்கள் | बिलं | பிலத்தை |
| ततः | அப்பொழுது | दृष्टवन्तः | கண்டவர்களாக ஆனோம். |

**अस्माद्धंसा जलक्लिन्नाः पक्षैः सलिलविस्रवैः । कुरराः सारसाश्चैव निष्पतन्ति पतत्रिणः ॥**

| | | | |
|---|---|---|---|
| हंसाः च | " ஹம்ஸங்களும், | सलिलविस्रवैः | நீரை ஒழுகவிடும் |
| कुरराः | மீன்குத்திப்பறவைகளும், | पक्षैः | இறகுகளோடு |
| सारसाः | குளத்திலிருப்பவைகளான | जलक्लिन्नाः | ஜலத்தில் நனைந்தவைகளாய் |
| | | अस्मात् | இவ்விடமிருந்து |
| पतत्रिणः एव | பக்ஷிகளும், | निष्पतन्ति | வெளிப்பட்டுவந்தன. |

**साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः ॥ १३ ॥**

| | | | |
|---|---|---|---|
| साधु | ' நல்லது | प्लवङ्गमाः | வானரர்கள் |
| अत्र | இதில் | मया | என்னால் |
| प्रविशाम | புகுவோம்' | तु | இப்பொழுது |
| इति | என்று | उक्ताः | சொல்லப்பட்டார்கள். |

**तेषामपि हि सर्वेषामनुमानमुपागतम् । गच्छाम प्रविशामेति भर्तृकार्यत्वरान्विताः ॥ १४ ॥**

| | | | |
|---|---|---|---|
| भर्तृकार्यत्वरान्विताः | " எஜமானன் காரியத்தில் துரையோடு கூடினவர்கள் | गच्छाम | 'போவோம்;' |
| हि | ஆதலால் | प्रविशाम | ' புகுவோம், ' |
| तेषां | அந்த | इति | என்ற |
| सर्वेषां अपि | எல்லோருக்கும் | अनुमानं | அபிப்பிராயம் |
| | | उपागतम् | உண்டாயிற்று. |

**ततो गाढं निपतिता गृह्य हस्तौ परस्परम् । इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ॥**

| | | | |
|---|---|---|---|
| ततः | " அதின்மேல் | तिमिरसंवृतं | இருள்மூடிய |
| परस्परं | ஒருவருக்கொருவர் | इदं | இந்த |
| हस्तौ | கைகளை | बिलं | பிலத்தை |
| गाढं | கெட்டியாய் | सहसा | உடனே |
| गृह्य | பற்றிக்கொண்டு, | प्रविष्टाः | நுழைந்தவர்களாக ஆனோம். |
| निपतिताः | இறங்கினவர்களாய் | | |

**एतन्नः कार्यमेतेन कृत्येन वयमागताः ॥ १६ ॥**

| | | | |
|---|---|---|---|
| एतत् | " இது | एतेन | இந்த |
| नः | எங்களது | कृत्येन | கார்யத்தோடே |
| | | वयं | நாங்கள் |
| कार्यं | கார்யம். | आगताः | வந்தவர்கள். |

**आतिथ्यधर्मदत्तानि मूलानि च फलानि च । अस्माभिरुपभुक्तानि बुभुक्षापरिपीडितैः ॥**

| | | | |
|---|---|---|---|
| आतिथ्यधर्म-दत्तानि | " அதிதிபூஜையின் தர்மத்தால் கொடுக்கப்பட்ட | बुभुक्षापरिपीडितैः | பசியால் மிக்க வருந்திய |
| | | अस्माभिः | எங்களால் |
| मूलानि च | கிழங்குகளும் | उपभुक्तानि | திருப்தியாய் புசிக்கப்பட்டன. |
| फलानि च | பழங்களும் | | |

**यत्त्वया रक्षिताः सर्वे म्रियमाणा बुभुक्षया । ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः ॥**

| | | | |
|---|---|---|---|
| त्वया | " உம்மால் | यत् | ஆனதால் |
| बुभुक्षया | பசியினால் | ते | உமக்கு |
| म्रियमाणाः | உயிர்மாய்ந்திறக்கும் | वानराः | வானரர்கள் |
| सर्वे | எல்லோரும் | प्रत्युपकारार्थं | ப்ரத்யுபகாரமாக |
| | | किं | யாது |
| रक्षिताः | காப்பாற்றப்பட்டவர்களாக ஆனோம். | कुर्वन्तु | செய்யவேண்டும், |
| | | ब्रूहि | சொல்லும் ". |

**एवमुक्ता तु सर्वज्ञा वानरैस्तैः स्वयंप्रभा । प्रत्युवाच ततः सर्वानिदं वानरयूथपान् ॥१९॥**

| | | | |
|---|---|---|---|
| तैः | அந்த | ततः | அப்பொழுது |
| वानरैः | வானரர்களால் | वानरयूथपान् | வானரசிரேஷ்டர்கள் |
| एवं | மேற்சொல்லியவாறு | सर्वान् | எல்லோரையும் பார்த்து |
| उक्ता | சொல்லப்பட்ட | इदं तु | பின்வருவதையே |
| सर्वज्ञा | எல்லாம் அறிந்த | प्रत्युवाच | பதிலாக மொழிந்தனள். |
| स्वयंप्रभा | ஸ்வயம்ப்ரபை | | |

**सर्वेषां परितुष्टाऽस्मि वानराणां तरस्विनाम् । चरन्त्या मम धर्मेण न कार्यमिह केनचित् ॥**

| | | | |
|---|---|---|---|
| तरस्विनां | " மிக்க பராக்ரம | चरन्त्याः | காலங்கழிக்கிற |
| वानराणां | வானரர்கள் [மூடைய | मम | எனக்கு |
| सर्वेषां | எல்லோரிடத்திலும் | इह | இங்கு |
| परितुष्टा अस्मि | சந்தோஷமடைந் | केनचित् | ஒருவராலும் |
| | தேன். | कार्यं | ஆகவேண்டிய காரியம் |
| धर्मेण | தெய்வபக்தியோடு | न | ஒன்றுமில்லை ". |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे द्विपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11369 किष्किन्धाकाण्डे आदितः श्लोकाः 2117

## त्रिपञ्चाशः सर्गः—ஐம்பத்திமூன்றுவது ஸர்க்கம் ॥ ५३ ॥

**प्रायोपवेशनिर्धारणम्**—பிராயோபவேசம் செய்ய தீர்மானிப்பது.

**एवमुक्तः शुभं वाक्यं तापस्या धर्मसंहितम् । उवाच हनुमान्वाक्यं तामनिन्दितचेष्टिताम् ॥**

| | | | |
|---|---|---|---|
| तापस्या | தபசியினால் | हनुमान् | ஹனுமார், |
| धर्मसंहितं | தர்மத்தோடியைந்த | अनिन्दितचेष्टितां | தோஷரஹித அனுஷ் |
| शुभं | மிகச் சிலாகிக்கத் | | டானமுள்ள |
| वाक्यं | சொல்லை, [தகுந்த | तां | அவளைப் பார்த்து |
| एवं | மேற்கண்டவிதம் | वाक्यं | ஒரு மொழியை |
| उक्तः | சொல்லப்பெற்ற | उवाच | சொன்னார். |

**शरणं त्वां प्रपन्नाः स्मः सर्वे वै धर्मचारिणि । यः कृतः समयोऽस्माकं सुग्रीवेण महात्मना ॥**
**स तु कालो व्यतिक्रान्तो बिले च परिवर्तताम् । सा त्वमस्माद्बिलाद्घोरादुत्तारयितुमर्हसि ॥**

| | | | |
|---|---|---|---|
| धर्मचारिणि | " அறவொழுக்க | कालः तु | காலமும் |
| | முடையாய்! | बिले | குகையில் |
| सर्वे वै | எல்லோரும் | परिवर्ततां | சுற்றிக்கொண்டிருந்த |
| त्वां | உம்மை | अस्माकं | எங்களுக்கு |
| शरणं | சரணமாக | व्यतिक्रान्तः | கழிந்துவிட்டது. |
| प्रपन्नाः स्मः | அடைந்தவர்களாகி | च | ஆதலால் |
| | றோம்; | सा | அந்த |
| महात्मना | மகாத்மாவான | त्वं | நீர் |
| सुग्रीवेण | சுக்ரீவரால் | घोरात् | கோரமான |
| कृतः | வரையறுக்கப்பட்ட | अस्मात् | இந்த |
| समयः | காலம் | बिलात् | குகையிலிருந்து |
| यः | எதுவோ | उत्तारयितुं | கரையேற்ற |
| सः | அந்த | अर्हसि | வேண்டியவராகிறீர். |

**तस्मात्सुग्रीववचनादतिक्रान्तान्गतायुषः । त्रातुमर्हसि नः सर्वान्सुग्रीवभयशङ्कितान् ॥ ४ ॥**

| | | | |
|---|---|---|---|
| तस्मात् | " அந்த | गतायुषः | பிராணன்போன பிராயமாக இருக்கின்ற |
| सुग्रीववचनात् | சுக்ரீவர் ஆக்ஞையில் | | |
| अतिक्रान्तान् | மீறி நடந்த [நின்றும் | नः | எங்களை |
| सुग्रीवभयशङ्कितान् | சுக்ரீவருடைய பயத்தால் திகில்கொண்ட | सर्वान् | எல்லோரையும் |
| | | त्रातुं अर्हसि | காப்பாற்றவேண்டும். |

**महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि । तच्चापि न कृतं कार्यमस्माभिरिह वासिभिः ॥**

| | | | |
|---|---|---|---|
| धर्मचारिणि | " அறவொழுக்கமுடையாய் ! | इह | இங்கு |
| | | वासिभिः | காலங்கழிக்கிற |
| अस्माभिः | எங்களால் | अस्माभिः | எங்களால் |
| कर्तव्यं | செய்யவேண்டிய | तत् | அந்த |
| कार्यं च | காரியமோ | कार्यं | காரியம் |
| महत् | மிகப் பெரியது. | अपि | இன்னும் |
| | | न कृतं च | செய்யப்படவேயில்லை". |

**एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् ॥ ६ ॥**

| | | | |
|---|---|---|---|
| हनुमता | ஹனுமானால் | तापसी | தாபஸி |
| एवं | இவ்விதம் | वाक्यं | வாக்யத்தை |
| उक्ता | சொல்லப்பட்ட | अब्रवीत् | சொன்னாள். |

**जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥ ७ ॥**

| | | | |
|---|---|---|---|
| प्रविष्टेन | "புகுந்தவனாலே | निवर्तितुं | திரும்புவதற்கு |
| जीवता | உயிருடன் | दुष्करं | அசாத்யமென்று |
| | | मन्ये | அறிவேன். |

**तपसस्तु प्रभावेन नियमोपार्जितेन च । सर्वानेव बिलादस्मादुद्धरिष्यामि वानरान् ॥ ८ ॥**

| | | | |
|---|---|---|---|
| सर्वान् | " எல்லா | नियमोपार्जितेन | நியமங்களால் சம்பாதித்த |
| वानरान् च | வானரர்களையும் | प्रभावेन तु | பிரபாவத்தினாலேயே |
| अस्मात् | இந்த | एव | இந்த க்ஷணமே |
| बिलात् | குகையினின்றும் | उद्धरिष्यामि | நான் வெளியில் கொண்டுபோய்ச் சேர்க்கிறேன். |
| तपसः | தவத்தினுடைய | | |

**निमीलयत चक्षूंषि सर्वे वानरपुङ्गवाः । न हि निष्क्रमितुं शक्यमनिमीलितलोचनैः ॥ ९ ॥**

| | | | |
|---|---|---|---|
| वानरपुङ्गवाः | " வானரவீரர்காள் ! | हि | ஆனதால் |
| अनिमीलित- लोचनैः | மூடாத கண்களையுடையவர்களாலே | चक्षूंषि | கண்களை |
| निष्क्रमितुं | வெளியில்போவதற்கு | सर्वे | எல்லோரும் |
| न शक्यं | முடியாது. | निमीलयत | மூடிக்கொள்ளுங்கள்'. |

**ततः संमीलिताः सर्वे सुकुमाराङ्गुलैः करैः । सहसाऽपिदधुर्दृष्टिं हृष्टा गमनकाङ्क्षिणः ॥१०॥**

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | सम्मीलिताः | இமைகளால் மூடிக் கொண்டவர்களாய், |
| सहसा | அந்த க்ஷணமே | सुकुमाराङ्गुलैः | மெல்லிய விரல்களை யுடைய |
| गमनकांक्षिणः | வெளியே போகவேண்டுமென்ற இச்சையை உடையவர்களாய், | करैः | கைகளினுலும், |
| हृष्टाः | களிப்புற்றவர்களாய், | दृष्टिं | கண்களை |
| सर्वे | எல்லோரும் | अपिदधुः | மூடிக்கொண்டார்கள். |

**वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा । निमेषान्तरमात्रेण बिलादुत्तारितास्तया ॥११॥**

| | | | |
|---|---|---|---|
| हस्तरुद्धमुखाः | கைகளால் மூடிக் கொண்ட முகங்களு டைய | निमेषान्तरमात्रेण | ஒரு நிமிஷகாலத் திற்குள்ளே |
| | | बिलात् | குகையில்நின்று |
| महात्मानः | மஹாத்மாக்களான | तया | அவளால் |
| वानराः | வானரர்கள் | तदा | அப்பொழுது |
| तु | இந்த ஸ்திதியில் | उत्तारिताः | வெளிப்படுத்தப் பட்டார்கள். |

**ततस्तान्वानरान्सर्वांस्तापसी धर्मचारिणी । निःसृतान्विषमात्तस्मात्समाश्वास्येदमब्रवीत् ॥**

| | | | |
|---|---|---|---|
| धर्मचारिणी | தர்மநிஷ்டையுள்ள | तान् | அந்த |
| तापसी | தபஸ்விநி | सर्वान् | எல்லா |
| तस्मात् | அந்த | वानरान् | வானரர்களையும் |
| विषमात् | அகோசரமான இடத்தினின்று | समाश्वास्य | உத்ஸாஹப்படுத்தி, |
| | | इदं | இனிவருவதை |
| | | ततः | அப்பொழுது |
| निस्सृतान् | தப்பி வெளிவந்த | अब्रवीत् | சொன்னாள். |

**एष विन्ध्यो गिरिः श्रीमान्नानाद्रुमलताकुलः । एष प्रस्रवणः शैलः सागरोऽयं महोदधिः ॥**

| | | | |
|---|---|---|---|
| नानाद्रुम-लताकुलः | "நானுவித மரங்களும் கொடிகளுமடர்ந்த | प्रस्रवणः | ப்ரஸ்ரவணம் எனும் |
| | | शैलः एषः | பர்வதம் இது. |
| श्रीमान् | அழகிய | महोदधिः | மஹோததி என்கிற |
| विन्ध्यः गिरिः | விந்தியபர்வதம் | सागरः | சமுத்திரம் |
| एषः | இது. | अयम् | இது. |

**स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरर्षभाः । इत्युक्त्वा तद्बिलं श्रीमत्प्रविवेश स्वयंप्रभा ॥**

| | | | |
|---|---|---|---|
| वानरर्षभाः | "வானரோத்தமர்களே ! | उक्त्वा | சொல்லிவிட்டு, |
| वः | உங்களுக்கு | स्वयंप्रभा | ஸ்வயம்ப்ரபை |
| स्वस्ति अस्तु | நன்மை உண்டாகுக. | तत् | அந்த |
| भवनं | மாளிகைக்கு | श्रीमत् | ப்ரக்யாதியான |
| गमिष्यामि | நான் போகிறேன்" | बिलं | குகைக்குள் |
| इति | என்று | प्रविवेश | புகுந்தாள். |

**ततस्ते ददृशुर्घोरं सागरं वरुणालयम् । अपारमभिगर्जन्तं घोरैरूर्मिभिरावृतम् ॥ १५ ॥**

| | | | |
|---|---|---|---|
| ततः | பிறகு | अपारं | கரையற்ற |
| ते | அவர்கள் | वरुणालयं | வருணனுக்கிருப்பிடமாகிய |
| घोरैः | பயங்கரமான | घोरं | கம்பீரமான |
| ऊर्मिभिः | அலைகளால் | सागरं | சமுத்திரத்தை |
| आवृतं | சூழப்பட்ட | ददृशुः | கண்டார்கள். |
| अभिगर्जन्तं | பெருங்கோஷமிடும் | | |

**मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् । तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥**

| | | | |
|---|---|---|---|
| मयस्य | மயனுடைய | कृतः | வரையறுக்கப்பட்டுள்ள |
| मायाविहितं | மாயையால் செய்த | समयः | காலம் |
| गिरिदुर्गं | மலைக்குஹையை | यः | எதுவோ அது |
| विचिन्वतां | ஆராய்ந்து பார்த்த | मासः | ஒரு மாதம் |
| तेषां | அவர்களுக்கு | व्यतिक्रान्तः | பூர்த்தியாய் கடந்துவிட்டது. |
| राज्ञा | அரசனால் | | |

**विन्ध्यस्य तु गिरेः पादे संप्रपुष्पितपादपे । उपविश्य महात्मानश्चिन्तामापेदिरे तदा ॥१७॥**

| | | | |
|---|---|---|---|
| तदा | அப்பொழுது | पादे | அடிவாரத்தில் |
| महात्मानः | மஹாத்மாக்கள் | उपविश्य | உட்கார்ந்துகொண்டு, |
| विन्ध्यस्य | விந்திய | तु | இதுவிஷயத்தில் |
| गिरेः | பர்வதத்தினுடைய | चिन्तां आपेदिरे | சிந்திக்கலாயினர். |
| संप्रपुष्पितपादपे | நன்றாய் அலர்ந்த மலர்ச்செறிந்த மரங்களையுடைய | | |

**ततः पुष्पातिभाराग्रांल्लताशतसमावृतान् । द्रुमान्वासन्तिकान् दृष्ट्वा बभूवुर्भयशङ्किताः ॥**

| | | | |
|---|---|---|---|
| ततः | அப்பொழுது | पुष्पातिभाराग्रान् | புஷ்பங்கள் நிறைந்த நுனிகளையுடையனவாய் |
| लताशतसमावृतान् | அநேக கொடிகளால் சூழப்பட்ட | दृष्ट्वा | கண்டு, |
| द्रुमान् | விருக்ஷங்களை | भयशङ्किताः | பயத்தால் திகிலடைந்தவர்களாக |
| वासन्तिकान् | வஸந்தகாலத்தை ஸூசிப்பிக்குமவைகளாய் | बभूवुः | ஆனார்கள். |

**ते वसन्तमनुप्राप्तं प्रतिबुद्ध्वा परस्परम् । नष्टसंदेशकालार्था निपेतुर्धरणीतले ॥ १९ ॥**

| | | | |
|---|---|---|---|
| ते | அவர்கள் | नष्टसन्देश-कालार्थाः | ஆக்ஞையையும், தவணையையும் காரியசித்தியையும் இழந்தவர்களாய் |
| वसन्तं | வஸந்தகாலத்தை | धरणीतले | பூமியில் |
| अनुप्राप्तं | கிட்டிவிட்டதாக | निपेतुः | விழுந்தார்கள். |
| परस्परं | ஒவ்வொருவரும் | | |
| प्रतिबुद्ध्वा | தெரிந்துகொண்டு, | | |

**ततस्तान्कपिवृद्धांस्तु शिष्टांश्चैव वनौकसः । वाचा मधुरयाऽऽभाष्य यथावदनुमान्य च ॥**
**स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः । युवराजो महाप्राज्ञ अङ्गदो वाक्यमब्रवीत् ॥**

| | | | |
|---|---|---|---|
| ततः | அச்சமயத்தில் | शिष्टान् एव | அறிவில் முதிர்ந்தவர்களையும், |
| सिंहवृषस्कन्धः | ஆண்சிங்கத்தின் தோள்களைபோன்ற தோள்களையுடைய, | तान् | அந்த |
| | | वनौकसः च | வானரர் முதலிய எல்லோரையும், |
| पीनायतभुजः | பருத்து நீண்ட கைகளையுடைய, | मधुरया | இனிய |
| महाप्राज्ञः | புத்திமானான | वाचा | வாக்கால் |
| सः | அந்த | आभाष्य | அழைத்து, |
| अङ्गदः | அங்கதனென்ற | यथावत् | கிரமப்படி |
| कपिः | வானரரான | अनुमान्य च | உபசாரம்செய்து, |
| युवराजः | இளவரசு | तु | தன்மட்டில் |
| कपिवृद्धान् तु | வானரவிருத்தர்களையும், | वाक्यं | மொழியை |
| | | अब्रवीत् | சொன்னார். |

**शासनात्कपिराजस्य वयं सर्वे विनिर्गताः । मासः पूर्णो बिलस्थानां हरयः किं न बुध्यते ॥**

| | | | |
|---|---|---|---|
| कपिराजस्य | "வானரமன்னவருடைய | बिलस्थानां | குகையிலிருக்கையில் |
| शासनात् | ஆக்ஞையால் | मासः | ஒரு மாதம் |
| वयं | நாம் | पूर्णः | முடிந்துவிட்டது. |
| सर्वे | எல்லோரும் | हरयः | வானரர்களே! |
| विनिर्गताः | வெளிப்புறப்பட்டவர்கள்; | किं न बुध्यते | ஏன் கவனிக்கப்படவில்லை? |

**वयमाश्वयुजे मासि कालसंख्याव्यवस्थिताः । प्रस्थिताः सोऽपि चातीतः किमतः कार्यमुत्तरम् ॥**

| | | | |
|---|---|---|---|
| अपि | "மேலும் | प्रस्थिताः | வெளிப்புறப்பட்டவர்கள்; |
| वयं | நாம் | सः च | அதுவும் |
| आश्वयुजे | ஆச்வினே என்ற (ஐப்பசி) | अतीतः | அதிக்ரமித்துவிட்டது; |
| मासि | மாதத்தில் | अतः | இதின்மேல் |
| कालसंख्या-व्यवस्थिताः | காலக்கணக்கின் நிஷ்கர்ஷைக்குட்பட்டவர்களாய் | उत्तरं | அடுத்த |
| | | कार्यं | செய்யவேண்டிய காரியம் |
| | | किम् | என்ன? |

**भवन्तः प्रत्ययं प्राप्ता नीतिमार्गविशारदाः । हितेष्वभिरता भर्तुर्निविष्टाः सर्वकर्मसु ॥२४॥**

| | | | |
|---|---|---|---|
| भवन्तः | "நீங்கள் | हितेषु | நன்மைகளில் |
| भर्तुः | எஜமானுடைய | अभिरताः | ஆஸக்தியுடையவர்கள்; |
| प्रत्ययं | நம்பிக்கையை | सर्वकर्मसु | எல்லாத் தொழில்களிலும் |
| प्राप्ताः | பெற்றவர்கள். | निर्विष्टाः | முற்றிலும் பிரயோகிக்கப்பட்டவர்கள். |
| नीतिमार्ग-विशारदाः | ராஜ்யதந்திர சாஸ்திரத்தில் வல்லவர்கள். | | |

**कर्मस्वप्रतिमाः शूरा दिक्षु विश्रुतपौरुषाः । मां पुरस्कृत्य निर्याताः पिङ्गाक्षेशप्रचोदिताः ॥**

| | | | |
|---|---|---|---|
| कर्मसु | "காரியங்களில் | पिङ्गाक्षेशप्रचोदिताः | வானரேசனால் ஏவப்பட்டவர்களாய் |
| अप्रतिमाः | ஒப்பில்லாதவர்கள் ; | मां | என்னை |
| शूराः | சூரர்கள் ; | पुरस्कृत्य | அனுசரித்து, |
| दिक्षु | எல்லா திக்குகளிலும் | निर्याताः | வெளிப் புறப்பட்டவர்கள். |
| विश्रुतपौरुषाः | ப்ரஸித்திபெற்ற பௌருஷமுள்ளவர்கள் ; | | |

**इदानीमकृतार्थानां मर्तव्यं नात्र संशयः । हरिराजस्य संदेशमकृत्वा कः सुखी भवेत् ॥**

| | | | |
|---|---|---|---|
| इदानीं | "இப்பொழுது | हरिराजस्य | வானரராஜருடைய |
| अकृतार्थानां | காரியத்தை முடிக்காதவர்களுக்கு | संदेशं | ஏவலை |
| मर्तव्यं | சாகவேண்டியதே ; | अकृत्वा | செய்யாமல், |
| आत्र | இதில் | कः | எவன் |
| संशयः न | சந்தேகமேயில்லை ; | सुखी भवेत् | சுகியாயிருப்பான். |

**तस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम् । प्रायोपवेशनं युक्तं सर्वेषां च वनौकसाम् ॥**

| | | | |
|---|---|---|---|
| सुग्रीवेण | "சுக்ரீவரால் | अतीते तु | கடந்துபோய்விட்ட |
| स्वयं | தானாகவே | वनौकसां | வானரர்கள் [அளவில் |
| कृते | குறிப்பிடப்பட்ட | सर्वेषां | எல்லோருக்கும் |
| तस्मिन् | அந்த | प्रायोपवेशनं च | பட்டினியிருந்து உயிர் |
| काले | தவணை | युक्तम् | தக்கது. [துறத்தலே |

**तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः । न क्षमिष्यति नः सर्वानपराधकृतो गतान् ॥**

| | | | |
|---|---|---|---|
| सुग्रीवः | "சுக்ரீவர் | व्यवस्थितः | ஸ்தாபிக்கப்பட்டவர் ; |
| प्रकृत्या | இயற்கையால் | अपराधकृतः | தப்பி நடந்தவர்களாய் |
| तीक्ष्णः | தப்பிதங்களை மன்னியாதவர் ; | गतान् | திரும்பிவந்த |
| | | नः सर्वान् | நம்மெல்லோரையும் |
| स्वामिभावे | எஜமானத்தன்மையில் | न क्षमिष्यति | மன்னிக்கமாட்டார். |

**अप्रवृत्तौ च सीतायाः पापमेव करिष्यति । तस्मात्क्षममिहाद्यैव हितं प्रायोपवेशनम् ॥**
**त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च ॥ २९ ॥**

| | | | |
|---|---|---|---|
| सीतायाः | ஸீதையின் | धनानि च | பொருள்களையும் |
| अप्रवृत्तौ | விருத்தாந்தத்தை யறியாதவளவில் | दारान् च | மனைவிமார்களையும் |
| | | त्यक्त्वा | நினையாமல், |
| पापं एव | கொடிய தண்டனையே | प्रायोपवेशनं एव | பட்டினிகிடந்து உயிரிழத்தல்தான் |
| च | நிச்சயமாய் | | |
| करिष्यति | விதிப்பார். | अद्य | இப்பொழுது |
| तस्मात् | ஆகையால் | इह | இவ்விடத்தில் |
| गृहाणि च | வீடுகளையும் | क्षमं | செய்யத்தக்க |
| पुत्रान् च | புத்திரர்களையும், | हितम् | நல்ல காரியம். |

**यावन्नो घातयेद्राजा सर्वान् प्रतिगतानितः। वधेनाप्रतिरूपेण श्रेयान् मृत्युरिहैव नः ॥३०॥**

| | | | |
|---|---|---|---|
| राजा | "மன்னர் | इह | இவ்விடத்தில் |
| इतः | இங்கிருந்து | अप्रतिरूपेण | அத்விதீயமான |
| प्रतिगतान् | திரும்பிச்சென்ற | वधेन एव | கஷ்டத்தாலேயே |
| नः | நம் | नः | நமக்கு |
| सर्वान् | எல்லோரையும் | मृत्युः | உயிரிழத்தல் |
| घातयेत् | கொலை புரிவார். | श्रेयान् | சிரேயஸ்கரமானது. |
| यावत् | ஆனதால் | | |

**न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः। नरेन्द्रेणाभिषिक्तोऽस्मि रामेणाक्लिष्टकर्मणा ॥**

| | | | |
|---|---|---|---|
| अहं | "நான் | अक्लिष्टकर्मणा | குறையற்ற செயல்களையுடைய |
| सुग्रीवेण | சுக்ரீவரால் | नरेन्द्रेण | புருஷோத்தமரான |
| यौवराज्येन | இளவரசனென்ற பதவியோடு | रामेण च | ஸ்ரீராமரால்தான் |
| अभिषेचितः न | நியமிக்கப்பட்டவன் அல்ல. | अभिषिक्तः अस्मि | பட்டம்கட்டப்பட்டிருக்கிறேன். |

**स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम्। घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः॥**

| | | | |
|---|---|---|---|
| मां | "என்னிடம் | दृष्ट्वा | கண்டு, |
| पूर्वं | ஏற்கனவே | कृतनिश्चयः | தீர்மானங்கொண்டவராய் |
| बद्धवैरः | வைரம் வைத்த | तीक्ष्णेन | கொடுமையான |
| सः राजा | அந்த அரசர் | दण्डेन | தண்டனையோடு |
| व्यतिक्रमं | கட்டளை மீறுதலை | घातयिष्यति | உயிரைவாங்கிவிடுவார். |

**किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे। इहैव प्रायमासिष्ये पुण्ये सागररोधसि ॥३३॥**

| | | | |
|---|---|---|---|
| जीवितान्तरे | "உயிர் போகும்பொழுது | किं | என்ன பயன்? |
| मे | எனது | इह एव | இப்பொழுதே |
| व्यसनं | கஷ்டத்தை | पुण्ये | புண்ணியமான |
| पश्यद्भिः | எதிரிலிருந்து பார்த்துக்கொண்டிருக்கும் | सागररोधसि | சமுத்திரக்கரையில் |
| | | प्रायं | பிராயோபவேசத்தை |
| सुहृद्भिः | நண்பர்களால் | आसिष्ये | அடைவேன்". |

**एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम्। सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन् ॥३४॥**

| | | | |
|---|---|---|---|
| युवराजेन | இளவரசான | श्रुत्वा | கேட்டு, |
| कुमारेण | இராஜகுமாரனால் | ते | அந்த |
| भाषितं | சொல்லப்பட்ட | वानरश्रेष्ठाः | வானரோத்தமர்கள் |
| करुणं | மனதை உருகச் செய்யும் | सर्वे | எல்லோரும் |
| | | एतत् | இதை |
| वाक्यं | சொல்லை | अब्रुवन् | சொன்னார்கள். |

तीक्ष्णः प्रकृत्या सुग्रीवः प्रियारक्तश्च राघवः। समीक्ष्याकृतकार्यांस्तु तस्मिंश्च समये गते ॥
अदृष्टायां तु वैदेह्यां दृष्ट्वास्मांश्च समागतान् ॥ ३५ ॥
राघवप्रियकामार्थं घातयिष्यत्यसंशयम्। न क्षमं चापराद्धानां गमनं स्वामिपार्श्वतः ॥३६॥

| | | | |
|---|---|---|---|
| सुग्रीवः | "சுக்ரீவர் | दृष्ट्वा | கண்டு, |
| प्रकृत्या | இயற்கையால் | च | அதன்மேல் |
| तीक्ष्णः | தப்பிதங்களை மன்னியாதவர். | अकृतकार्यान् | காரியத்தை முடிக்காதவர்களாக |
| राघवः च | ராகவரோ | समीक्ष्य | உணர்ந்துகொண்டு |
| प्रियारक्तः | மனைவியின்மேல் அன்புள்ளவர். | राघवप्रियकामार्थं | ராகவரின் ப்ரிய நிமித்தம் |
| वैदेह्यां | வைதேஹி | च | உடனே |
| अदृष्टायां तु | காணப்படாமல் | घातयिष्यति | கொன்றுவிடுவார். |
| तस्मिन् | அந்த | असंशयं | ஸந்தேகமே இல்லை. |
| समये | தவணை | अपराद्धानां | குற்றவாளிகளுக்கு |
| गते तु | கடந்து | स्वामिपार्श्वतः | எஜமான் பக்கலில் |
| समागतान् | திரும்பிவந்திருக்கிற | गमनं च | போகுதலும் |
| अस्मान् | நம்மை | न क्षमम् | தக்கதன்று. |

इहैव सीतामन्विष्य प्रवृत्तिमुपलभ्य च। नो चेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥

| | | | |
|---|---|---|---|
| सीतां | "ஸீதையை | वीरं | சூரரை |
| अन्विष्य | தேடி, | गमिष्यामः | அடைவோம். |
| प्रवृत्तिं | செய்தியை | नो चेत् | அப்படி இல்லாத |
| उपलभ्य | அறிந்துகொண்டு, | इह एव | இங்கேயே [பக்ஷத்தில் |
| च | பின்னர், | यमक्षयं | மரணத்தை |
| तं | அந்த | गच्छामः | அடைவோம். |

प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे।
अलं विषादेन बिलं प्रविश्य वसाम सर्वे यदि रोचते वः ॥ ३८ ॥

| | | | |
|---|---|---|---|
| भयार्दितानां | பயத்தால் திகில்கொண்ட | विषादेन | "மனத்தளர்ச்சியால் |
| प्लवङ्गमानां | வானரர்களின் | अलं | பிரயோஜனமில்லை. |
| वचः | வார்த்தையை | वः रोचते यदि | நீங்கள் ஒப்புக்கொள்ளும் பக்ஷத்தில் |
| श्रुत्वा | கேட்டு, | सर्वे | எல்லோரும், |
| तारः | தாரன் என்ற வானரன் | बिलं | குஹையில் |
| तु | இவ்விஷயத்தில் | प्रविश्य | திரும்பவும் புகுந்து, |
| इदं | பின்வருகிறதை | वसाम | வசித்துக்கொண்டிருப்போம். |
| बभाषे | பிரசிங்கித்தான். | | |

इदं हि मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयकम् ।
इहास्ति नो नैव भयं पुरन्दरान्न राघवाद्वानरराजतोऽपि वा ॥ ३९ ॥

| | | | |
|---|---|---|---|
| इदं हि | "இதுவோ | इह | இங்கு |
| मायाविहितं | மாயையால் நிர்மிக் | नः | நமக்கு |
| | கப்பட்டது ; | भयं | பயமென்பது |
| सुदुर्गमं | புகவரிது ; | राघवात् वा | ராகவரிடத்தில் |
| प्रभूतवृक्षोदक- | ஏராளமான விருக்ஷங் | | நின்றும், |
| भोज्यपेयकं | களும், தீர்த்தங்களும் | वानरराजतः अपि | வானரமன்னரிடத் |
| | உண்ணத்தக்கவைக | न अस्ति | இல்லை. [தில் நின்றும் |
| | ளும், பானங்களும் | पुरन्दरात् एव | இந்திரனிடத்தில் |
| | நிறைந்தது. | न | இல்லை". [நின்றுகூட |

श्रुत्वाऽङ्गदस्यापि वचोऽनुकूलमूचुश्च सर्वे हरयः प्रतीताः ।
यथा न हिंस्येम तथा विधानमसक्तमद्यैव विधीयतां नः ॥ ४० ॥

| | | | |
|---|---|---|---|
| सर्वे | எல்லா | न हिंस्येम | அழிக்கப்படமாட் |
| हरयः च | வானரர்களும் | | டோமோ ; |
| वचः | போதனையை | तथा | அந்தப்ரகாரம் |
| श्रुत्वा | கேட்டு, | अद्य एव | இப்பொழுதே |
| अङ्गदस्य अपि | அங்கதனுக்கும் | असक्तं | தாமதமின்றி |
| अनुकूलं | ஹிதமானதாக | नः | நமக்கு |
| प्रतीताः | தீர்மானம் கொண்ட | विधानं | ஓர் சூழ்ச்சி |
| | வர்களாய் | विधीयतां | விதிக்கப்பட்டுமென் |
| यथा | எப்படியானல் | ऊचुः | தெரிவித்தார்கள். [று |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे त्रिपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11409 किष्किन्धाकाण्डे आदितः श्लोकाः 2157



## चतुःपञ्चाशः सर्गः—ஐம்பத்திநான்காவது ஸர்க்கம் ॥ ५४ ॥

हनूमताऽङ्गदभीषणम्—ஹனுமான் அங்கதனை பயப்படுத்துவது.

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि । अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥ १ ॥

| | | | |
|---|---|---|---|
| ताराधिपतिवर्चसि | சந்திரனைபோன்ற | अङ्गदेन | அங்கதனல் |
| | அழகுள்ள | तत् | அது |
| तारे | தாரன் என்றவான | राज्यं | ஆளுகைக்கு |
| | ரன் | हृतं | ஒப்புக்கொள்ளப்பட் |
| तथा | மேற்கண்டவிதம் | हनुमान् | ஹனுமார் [டதாக |
| ब्रुवति तु | தனக்கும் தெரியுமெ | अथ | இப்பொழுது |
| | ன்று சொல்லுகையில் | मेने | கவலைகொண்டார். |

**बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् । चतुर्दशगुणं मेने हनुमान्वालिनः सुतम् ॥२॥**

| | |
|---|---|
| वालिनः | வாலியின் |
| सुतं | புதல்வனை |
| अष्टाङ्गया | எட்டுவித அங்கங்கள் சேர்ந்த * |
| बुद्ध्या | புத்தியுடன் |
| युक्तं | கூடினவனாக |
| चतुर्बलसमन्वितं | நான்குவிதம் பலத்தையும் பெற்றவனாக † |
| चतुर्दशगुणं | பதினான்கு குணங்களுமுடையவனாக ‡ |
| हि | ஸந்தேகமின்றி |
| हनुमान् | ஹனுமார் |
| मेने | தீர்க்காலோசனை செய்தார். |

* 1. பிறர் சொல்வதை சீக்கிரமாய் கிரகித்தல், 2. அதை மனதில் தரித்தல், 3. ஸமயத்தில் ஞாபகத்திற்குக் கொண்டுவருதல், 4. அதை பிறருக்கு விளங்க உரைத்தல், 5. யுக்தியாய் பேசுதல், 6. பிறருடைய தப்பு யுக்திகளைக் கண்டித்தல், 7. பிறர் சொல்வதின் நிஜமான அர்த்தத்தைஅறிதல், 8. விஷயங்களின் தத்துவங்களை உள்ளபடி அறிதல்.

† 1. பாஹுபலம், 2. மனோபலம், 3. உபாயபலம், 4, பந்துபலம்.

‡ 1. தேசம், காலம், இடம்இவைகளை அறிதல், 2. மன உறுதி, 3. ஸகல கஷ்டங்களையும் பொறுத்தல், 4. ஸகல விஷயங்களையும் அறிதல், 5. அறிய வேண்டியது செய்யவேண்டியது இவைகளில் ஸமர்த்தனாக இருத்தல், 6. விடாமுயற்சி, 7. ஆலோசனைகளை மறைத்துவைத்தல், 8. சொன்ன சொல் தவறாமை, 9. சௌரியம், 10. திறமையின் எல்லையை அறிதல், 11. நன்றி மறவாமை, 12. நம்பினோரை கைவிடாதிருத்தல், 13. க்ஷமை, 14. கலவரமின்மை.

**आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः । शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥ ३ ॥**
**बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः । शुश्रूषमाणं तारस्य गुरोरिव पुरन्दरम् ॥ ४ ॥**
**भर्तुरर्थे परिश्रान्तं सर्वशास्त्रविशारदम् । अभिसंधातुमारेभे हनुमानङ्गदं ततः ॥ ५ ॥**

| | |
|---|---|
| शुक्लपक्षादौ | சுக்லபக்ஷத்தின் ஆதியில் |
| श्रिया | காந்தியினால் |
| वर्धमानं | வளரும் |
| शशिनं | சந்திரனை |
| इव | போல் |
| तेजोबलपराक्रमैः | தேஜஸ் பலம் பராக்ரமம் இவைகளால் |
| शश्वत् | மேன்மேல் |
| आपूर्यमाणं च | பூரிக்கப்பட்டவனும், |
| बुद्ध्या | புத்தியால் |
| बृहस्पतिसमं | பிரஹஸ்பதிக்கு நிகரானவனும், |
| विक्रमे | ஆண்மையில் |
| पितुः | தந்தைக்கு |
| सदृशं | ஒப்பானவனும், |
| गुरोः | பிரஹஸ்பதிக்கு |
| पुरन्दरं | இந்திரனை |
| इव | போல் |
| तारस्य | தாரனுடைய |
| शुश्रूषमाणं | சொற்படி நடப்பவனும், |
| भर्तुः | எஜமானனுடைய |
| अर्थे | காரியத்தில் |
| परिश्रान्तं | மனம் தளர்ந்தவனும், |
| सर्वशास्त्र-विशारदं | எல்லா சாஸ்திரங்களிலும் வல்லவனுமான |
| अङ्गदं | அங்கதனை |
| ततः | அப்பொழுது |
| हनुमान् | ஹனுமார் |
| अभिसंधातुं | தன்பக்ஷம் செய்து கொள்ள |
| आरेभे | சிரத்தைகொண்டார். |

**स चतुर्णामुपायानां तृतीयमुपवर्णयन् । भेदयामास तान्सर्वान्वानरान्वाक्यसंपदा ॥ ६ ॥**

| | | | |
|---|---|---|---|
| सः | அவர் | उपवर्णयन् | அனுஷ்டிப்பவராய் |
| चतुर्णां | ஸாமம், தானம், பேதம், தண்டம் என்ற நான்கு | तान् | அந்த |
| | | वानरान् | வானரர்கள் |
| उपायानां | உபாயங்களுக்குள் | सर्वान् | எல்லோரையும் |
| तृतीयं | மூன்றாவதை (அதாவது பேதம் என்ற உபாயத்தை) | वाक्यसंपदा | வார்த்தையின் சிறப்பால் |
| | | भेदयामास | கலைத்துவிட்டார். |

**तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् । भीषणैर्बहुभिर्वाक्यैः कोपोपायसमन्वितैः ॥ ७ ॥**

| | | | |
|---|---|---|---|
| तेषु | அவர்கள் | भीषणैः | பயத்தை விளைவிக்கும் |
| सर्वेषु | எல்லோரும் | बहुभिः | பல |
| भिन्नेषु | பிரிவடைந்தவளவில் | वाक्यैः | பேச்சுக்களால் |
| अङ्गदं | அங்கதனை | ततः | அப்பொழுது |
| कोपोपाय- समन्वितैः | கோபக்குறிகளுடன் கூடியதான | अभीषयत् | கலங்கச்செய்தார். |

**त्वं समर्थतरः पित्रा युद्धे तारेय वै धुरम् । दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥**

| | | | |
|---|---|---|---|
| तारेय | "தாரைகுமாரா! | यथा | எப்படியோ அப்படி |
| त्वं | நீ | कपिराज्यं | வானரராஜ்யம் |
| युद्धे | போரில் | दृढं | முற்றிலும் |
| पित्रा समर्थतरः | பிதாவைக்காட்டிலும் ஸமர்த்தன். | धुरं | தலைமையை |
| | | धारयितुं | வஹிக்க |
| पिता | தகப்பன் | शक्तः वै | சக்தனே. |

**नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव । नाज्ञाप्यं विसहिष्यन्ति पुत्रदारान्विना त्वया ॥**

| | | | |
|---|---|---|---|
| हि | "அப்படி இருந்தும் | त्वया | உன்னாலே |
| हरिपुङ्गव | வானரோத்தம! | आज्ञाप्यं | கட்டளையிடப்பட்டதை |
| कपयः | வானரர்கள் | | |
| नित्यं | எப்பொழுதுமே | पुत्रदारान् विना | மனைவிமக்களை விட்டு |
| अस्थिरचित्ताः | சஞ்சலபுத்தியுடையவர்கள். | न विसहिष्यन्ति | பொறுத்துச்செய்ய மாட்டார்கள். |

**त्वां नैते ह्यनुयुञ्जेयुः प्रत्यक्षं प्रवदामि ते । यथायं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ॥**

| | | | |
|---|---|---|---|
| जांबवान् | "ஜாம்பவான், | अयं यथा | இவனைப்போல |
| नीलः | நீலனென்ற வானர ச்ரேஷ்டன், | त्वां | உன்னை |
| | | न अनुयुञ्जेयुः | அனுவர்த்திக்கமாட்டார்கள். |
| | | ते | உனக்கு |
| महाकपिः | வானரர்களில் பெயர் பெற்ற | प्रत्यक्षं | ஸ்பஷ்டமாய் விளங்கும்படி |
| सुहोत्रः | ஸுஹோத்திரன், | प्रवदामि हि | நிச்சயமாய்ச் சொல்லலானேன். |
| एते च | இவர்கள் எல்லோரும் | | |

**न ह्यहं त इमे सर्वे सामदानादिभिर्गुणैः । दण्डेन वा त्वया शक्याः सुग्रीवादपकर्षितुम् ॥**

| | | | |
|---|---|---|---|
| ते | "அந்த | दण्डेन वा | அல்லது தண்டோபாயம் ஒன்றையே கொண்டாவது |
| इमे | இவர்கள் | सुग्रीवात् | சுக்ரீவனிடத்தினின்று |
| सर्वे | எல்லோரும், | त्वया | உன்னால் |
| अहं हि | நானும் | अपकर्षितुं | வசப்படுத்திக்கொள்ள |
| सामदानादिभिः | ஸாமம் தானம் முதலிய | शक्याः न | முடியாதவர்களே |
| गुणैः | உபாயங்களால் | | |

**विगृह्यासनमप्याहुर्दुर्बलेन बलीयसः । आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः ॥ १२ ॥**

| | | | |
|---|---|---|---|
| दुर्बलेन | "பலஹீனனோடு | बलीयसः | பலவானுடையது |
| विगृह्य | எதிர்த்து யுத்தம் செய்து, | आहुः | பெரியோர்கள் [என்று சொல்லுகிறார்கள். |
| आसनं अपि | போர்புரியும் உபாயங்கள் ஆறிலொன்றான எதிரியை எதிர்பார்த்து மறைந்திருத்தலும் | तस्मात् | ஆனபடியால் |
| | | आत्मरक्षाकरः | தன்னை காப்பாற்றிக் கொள்ளவேண்டிய |
| | | दुर्बलः | பலஹீனன் |
| | | न विगृह्णीत | எதிர்க்கலாகாது. |

**यां चेमां मन्यसे धात्रीमेतद्बिलमिति श्रुतम् । एतल्लक्ष्मणबाणानामीषत्कार्यं विदारणे ॥**

| | | | |
|---|---|---|---|
| एतत् | "இந்த | मन्यसे च | பெரிதாய் பாராட்டுகிறாயோ |
| बिलं | குகை | एतत् | இதை |
| श्रुतं इति | கண்டுபிடிக்கப்பட்டதால் | विदारणे | பிளக்கும் விஷயத்தில் |
| यां | எந்த | लक्ष्मणबाणानां | லக்ஷ்மணரின் பாணங்களுக்கு |
| इमां | இதை | | |
| धात्रीं | போஷிக்கும் செவிலித்தாயாக | ईषत् | ஒரு க்ஷணகால |
| | | कार्यम् | காரியம். |

**स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा । लक्ष्मणो निशितैर्बाणैर्भिन्द्यात्पत्रपुटं यथा ॥**

| | | | |
|---|---|---|---|
| पुरा | "முற்காலத்தில் | निशितैः | கூரான |
| अशनिं | வஜ்ராயுதத்தை | बाणैः | பாணங்களால் |
| क्षिपता | எறிந்த | पत्रपुटं | ஓர் இலைத்தொன்னையை |
| इन्द्रेण हि | இந்திரனாலேயே | | |
| स्वल्पं | ஒரு நிமிஷத்தில் | यथा | போல் |
| कृतं | துளைக்கப்பட்டது. | भिन्द्यात् | கிழித்துவிடுவார். |
| लक्ष्मणः | லக்ஷ்மணர் | हि | சந்தேகமில்லை. |

**लक्ष्मणस्य च नाराचा बहवः सन्ति तद्विधाः । वज्राशनिसमस्पर्शा गिरीणामपि दारणाः ॥**

| | | | |
|---|---|---|---|
| गिरीणां | பர்வதங்களுக்கு | बहवः अपि | அளவிற்கு மிஞ்சினவைகளுமான |
| वज्राशनि- समस्पर्शाः | வஜ்ரம், இடி, இவைகளைப்போல் ஸ்பர்சமுள்ள | नाराचाः | நாராசங்கள் |
| दारणाः | பிளப்பனவான | लक्ष्मणस्य | லக்ஷ்மணருக்கு |
| तद्विधाः च | அதேவிதங்களானவும் | सन्ति | உண்டு. |

**अवस्थाने यदैव त्वमासिष्यसि परंतप। तदैव हरयः सर्वे त्यक्ष्यन्ति कृतनिश्चयाः॥ १६॥**

| | | | |
|---|---|---|---|
| परंतप | "ஓ வீர! | तदा | அப்பொழுது |
| त्वं | நீ | कृतनिश्चयाः | தீர்மானம் செய்து கொண்டவர்களாய் |
| अवस्थाने एव | தங்கியிருக்குமிடத்தி | त्यक्ष्यन्ति | விட்டோடிப் போவார் கள். |
| आसिष्यसि यदा | இருப்பாயாகில்[லேயே | | |
| हरयः सर्वे एव | வானரர்கள் எல்லோ ருமே | | |

**स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः। खेदिता दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः॥**

| | | | |
|---|---|---|---|
| पुत्रदाराणां | "பிள்ளைகள் பெண்டு கள் இவர்களுடைய | बुभुक्षिताः | போகங்களை விரும்பி யவர்களாய் |
| स्मरन्तः | நினைவு கொண்டவர் களாய் | दुःखशय्याभिः | மனதிற்கிசையாப் படுக்கைகளால் |
| नित्योद्विग्नाः | எப்பொழுதும் திகில லடைந்தவர்களாய் | खेदिताः | வருத்தமடைந்தவர் [கள் |
| | | त्वां | உன்னை |
| | | पृष्ठतः करिष्यन्ति | கைவிடுவார்கள். |

**स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः। तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि।**

| | | | |
|---|---|---|---|
| हितकामैः च | "ஹிதத்தைக்கோரும் அவர்களாலும், | त्वं | நீ |
| बन्धुभिः | பந்துக்களாலும், | स्पन्दमानात् | அசையும் |
| सुहृद्भिः च | நண்பர்களாலும் | तृणात् अपि | துரும்பினின்றும் |
| हीनः | கைவிடப்பட்ட | भृशोद्विग्नः | மிக்க பயந்தவனாய் |
| सः | அந்த | भविष्यसि | இருப்பாய். |

**न च जातु न हिंस्युस्त्वां घोरा लक्ष्मणसायकाः। अपावृत्तं जिघांसन्तो महावेगा दुरासदाः॥**

| | | | |
|---|---|---|---|
| घोराः | "கொடியனவாய் [கும் | अपावृत्तं | திரஸ்கரிக்கப்பட்ட |
| जिघांसन्तः | சத்ருக்களையழிக்- | त्वां | உன்னை |
| महावेगाः | மிக்க வேகமுள்ள | न हिंस्युः | கொல்லாதிருக்கு மென்பது |
| दुरासदाः | உவமையற்ற | जातु | ஒருக்காலும் |
| लक्ष्मणसायकाः | லக்ஷ்மணரின் பாணங் கள் | न च | இல்லை நிச்சயம். |

**अस्माभिस्तु गतं सार्धं विनीतवदुपस्थितम्। आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति॥**

| | | | |
|---|---|---|---|
| तु | "அப்படி இல்லாமல் | त्वां | உன்னை |
| अस्माभिः | எங்களோடு | सुग्रीवः तु | சுக்ரீவரே |
| सार्धं | கூடவே | आनुपूर्व्यात् | வரிசைக்கிரமத்தை யொத்து |
| गतं | திரும்பிவந்தவனாய் | | |
| विनीतवत् | அடக்கத்துடன் | राज्ये | ராஜாங்கத்தில் |
| उपस्थितं | ப்ரார்த்திக்கும் | स्थापयिष्यति | நிலைநிறுத்துவார். |

**धर्मकामः पितृव्यस्ते प्रीतिकामो दृढव्रतः । शुचिः सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति ॥**

| | | | |
|---|---|---|---|
| ते | "உனக்கு | सत्यप्रतिज्ञः | சொன்னசொல் தவருதவர். |
| पितृव्यः | சிறிய தகப்பனுர் | च | ஆதலால் |
| धर्मकामः | தர்மத்தையே செய்ப[வர், | त्वां | உன்னை |
| प्रीतिकामः | ப்ரீதி வைத்தவர், | जातु | ஒருக்காலும் |
| दृढव्रतः | த்ருடமான வ்ரதமுடையவர், | जिघांसति न | கெடுக்க நினைக்கமாட்டார். |
| शुचिः | நல்லொழுக்கமுடையவர், | | |

**प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम् । तस्यापत्यं च नास्त्यन्यत्तस्मादङ्गद गम्यताम् ॥**

| | | | |
|---|---|---|---|
| ते | "உனது | तस्य | அவருக்கு |
| मातुः | தாயாரின் | अन्यत् | வேறு |
| प्रियकामः च | பிரியத்தையே கோருபவர் | अपत्यं च | சந்ததியும் |
| | | नास्ति | இல்லை. |
| अस्य | இவருடைய | तस्मात् | ஆகையால் |
| जीवितं च | உயிரோடிருத்தலும் | अङ्गद | அங்கத! |
| तदर्थं | அதற்க்காகவே | गम्यताम् | எழுந்து செல்". |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे चतुःपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11431 किष्किन्धाकाण्डे आदितः श्लोकाः 2179



## पञ्चपञ्चाशः सर्गः—ஐம்பத்தைந்தாவது ஸர்க்கம் ॥ ५५ ॥

## वानराणां प्रायोपवेशः—வானரர்களின் பிராயோபவேசம்.

**श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम् । स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥१॥**

| | | | |
|---|---|---|---|
| हनुमतः | ஹனுமாரின் | वाक्यं | சம்பாஷணையை |
| प्रश्रितं | வணக்கமுடைய | श्रुत्वा | கேட்டு, |
| धर्मसंहितं | தர்மத்தையொத்த | अङ्गदः | அங்கதன் |
| स्वामिसत्कारसंयुक्तं | எஜமானனின் நன்மையை பயப்பதான | वाक्यं | பதிலை (பின்வருமாறு) |
| | | अब्रवीत् | சொன்னான். |

**स्थैर्यमात्ममनःशौचमानृशंस्यमथार्जवम् । विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २ ॥**

| | | | |
|---|---|---|---|
| स्थैर्यं च | "ஸ்திரபுத்தியும் | आर्जवं | நேர்மையும் |
| आत्ममनः- शौचं एव | அந்தக்கரண சுத்தியும் | विक्रमः | ஆண்மையும் |
| | | धैर्यं | தைரியமும் |
| आनृशंस्यं च | இரக்கமும் | सुग्रीवे | சுக்ரீவரிடத்தில் |
| अथ | அப்படியே | न उपपद्यते | காணப்படவில்லை. |

**भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम्। धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥**
**कथं स धर्मं जानीते येन भ्रात्रा दुरात्मना। युद्धायाभिनियुक्तेन बिलस्य पिहितं मुखम् ॥**

| | | | |
|---|---|---|---|
| यः | " எவன் | येन | எந்த |
| धर्मेण | தர்மானுசாரமாய் | दुरात्मना | துராத்மாவினால் |
| मातरं | தாயும் | युद्धायाभिनियुक्तेन | சண்டையிட்டுக் கொண்டிருக்கிற |
| जीवतः | உயிரோடிருக்கிற | भ्राता तु | சகோதரனுடனேயே |
| ज्येष्ठस्य | ஜ்யேஷ்ட | बिलस्य | குகையின் |
| भ्रातुः | ப்ராதாவின் | मुखं | வழி |
| भार्यां | பத்தினியுமான | पिहितं | மூடப்பட்டதோ |
| प्रियां | காதல் | यः सः | அப்போர்க்கொத்தவன் |
| महिषीं | தேவியை | धर्मं | தர்மத்தை |
| जुगुप्सितः | யாவராலும் நிந்திக்கப் பட்டவனாய் | जानीते | அறிகிறது |
| स्वीकरोति | தனக்குரியவளாக்கிக் கொண்டானே | कथम् | எவ்வண்ணம். |

**सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः। विस्मृतो राघवो येन स कस्य तु कृतं स्मरेत् ॥**

| | | | |
|---|---|---|---|
| सत्यात् | " ஸத்யத்தையும் செய்துவிட்டு | राघवः च | ராகவரே |
| पाणिगृहीतः | கையடித்துக் கொடுத் தவராய் | येन | எவனால் |
| कृतकर्मा | { கோரிய காரியத்தை யும் செய்துமுடித்த வரான | विस्मृतः | மறந்துவிடப்பட் [டாரோ |
| महायशाः | பெரும் புகழுடைய | सः | அவன் |
| | | कस्य | யாருடைய |
| | | कृतं तु | உபகாரத்தைத்தான் |
| | | स्मरेत् | நினைந்திருக்கப் போகிறான். |

**लक्ष्मणस्य भयाद्येन नाधर्मभयभीरुणा। आदिष्टा मार्गितुं सीतां धर्मस्तस्मिन्कथं भवेत् ॥**

| | | | |
|---|---|---|---|
| अधर्मभयभीरुणा | " அதர்மம் என்ற பய [த்தால் | मार्गितुं | தேடுவதற்கு |
| न | அல்லாமல் | आदिष्टाः | அனுப்பப்பட்டார்க [ளோ |
| लक्ष्मणस्य | லக்ஷ்மணருடைய | तस्मिन् | அவனிடத்தில் |
| भयात् | பயத்தின் நிமித்தம் | धर्मः | தர்மம் |
| येन | எவனால் | कथं | எங்ஙனம் |
| सीतां | சீதையை | भवेत् | இருக்கும். |

**तस्मिन्पापे कृतघ्ने तु स्मृतिहीने चलात्मनि। आर्यः को विश्वसेज्जातु तत्कुलीनो जिजीविषुः ॥**

| | | | |
|---|---|---|---|
| कृतघ्ने | " நன்றிகெட்டவனும், | तत्कुलीनः | அந்தக்குலத்தில் பிறந்த |
| स्मृतिहीने | சம்பிரதாய நெறி தவறினவனும், | जिजीविषुः | கௌரவமாக இருக்க [வெண்ணிய |
| चलात्मनि | சபலசித்தனுமான | आर्यः | ஆர்யன் |
| तस्मिन् | அந்த | कः तु | எவன் தான் |
| पापे | மகாபாபியினிடத்தில் | जातु | எப்படித்தான் |
| | | विश्वसेत् | நம்பிக்கைவைப்பான்? |

**राज्ये पुत्रः प्रतिष्ठाप्यः सगुणो निर्गुणोऽपि वा । कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ।।**

| | |
|---|---|
| सगुणः वा | " குணமுள்ளவனா யினும், |
| निर्गुणः अपि | குணமில்லாதவனா யினும் |
| पुत्रः | புத்திரன் |
| राज्ये | ராஜ்யத்தில் |
| प्रतिष्ठाप्यः | பட்டம் சூட்டப்படு வான். |
| सुग्रीवः | சுக்ரீவன் |
| शत्रुकुलीनं | சத்ருகுலத்தில் பிறந்த |
| मां | என்னை |
| कथं | எப்படி |
| जीवयिष्यति | உயிரோடு வைப்பான்? |

**भिन्नमन्त्रोऽपराद्धश्च हीनशक्तिः कथं ह्यहम् । किष्किन्धां प्राप्य जीवेयमनाथ इव दुर्बलः ।।**

| | |
|---|---|
| भिन्नमन्त्रः | "ராஜ்யகாரியத்தில் குறைசெய்த |
| अपराद्धः | ஏவலைச் செய்துமுடிக் காத |
| हीनशक्तिः | ஆற்றல்கெட்ட |
| अहं | நான் |
| किष्किन्धां च | கிஷ்கிந்தைக்கும் |
| प्राप्य | சென்று, |
| इव | முற்றிலும் |
| दुर्बलः | மனோதைர்யமிழந்த வனாய் |
| अनाथः | புகலிடமில்லாதவ னாய் |
| कथं हि | எப்படித்தான் |
| जीवेयम् | உயிர்வாழ்வேன் ? |

**उपांशु दण्डेन हि मां बन्धनेनोपपादयेत् । शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ।।**

| | |
|---|---|
| सुग्रीवः | " சுக்ரீவன் |
| नृशंसः | இரக்கமற்றவன். |
| क्रूरः | கொடியவன். |
| शठः | கெட்டவன். |
| च | ஆதலால் |
| राज्यकारणात् | ராஜ்யத்தின் நிமித்தம் |
| उपांशु | ரஹஸ்யமாய் |
| बन्धनेन | சிறையில் வைத்த லான |
| दण्डेन हि | தண்டனையோடு |
| मां | என்னை |
| उपपादयेत् | காவலில் வைப்பான். |

**बन्धनाद्वाऽवसादान्मे श्रेयः प्रायोपवेशनम् । अनुजानीत मां सर्वे गृहान् गच्छन्तु वानराः ।।**

| | |
|---|---|
| वानराः | " வானரர்காள்! |
| मां | எனக்கு |
| अनुजानीत | விடை தாருங்கள், |
| बन्धनात् | சிறையிலிருப்பதைக் |
| वा | அல்லது [காட்டிலும் |
| अवसादात् | க்ஷீணதசையை அடைவதைவிட |
| मे | எனக்கு |
| प्रायोपवेशनं | பட்டினிகிடந்து உயிரிழத்தலே |
| श्रेयः | மேலானது. |
| सर्वे च | எல்லோரும் |
| गृहान् | வீடுகளுக்கு |
| गच्छन्तु | போய்ச் சேருங்கள். |

**अहं वः प्रतिजानामि नागमिष्याम्यहं पुरीम् । इहैव प्रायमासिष्ये श्रेयो मरणमेव मे ।।**

| | |
|---|---|
| अहं | நான் |
| पुरीं | பட்டணத்திற்கு |
| न आगमिष्यामि | திரும்பி வரமாட் டேன். |
| इह एव | இவ்விடத்திலேயே |
| प्रायं | ப்ராயோபவேசத்தை |
| आसिष्ये | அனுஷ்டிப்பேன். |
| मे | எனக்கு |
| एव | இந்த ப்ரகாரமே |
| मरणं | மரணம் |
| श्रेयः | மேலானது. |
| अहं | நான் |
| वः | உங்களுக்கு |
| प्रतिजानामि | உறுதியாய்ச் சொல் லுகிறேன். |

**अभिवादनपूर्वं तु राघवौ बलशालिनौ । अभिवादनपूर्वं तु राजा कुशलमेव च ॥**
**वाच्यस्तातो यवीयान्मे सुग्रीवो वानरेश्वरः ॥ १३ ॥**

| | |
|---|---|
| बलशालिनौ | "பலசாலிகளான |
| राघवौ | ராகவர்களிருவரும் |
| अभिवादनपूर्वं | முதலில் நமஸ்காரம் பெற்றவர்களாய் |
| तु | பின்னர் |
| यवीयान् | சிறிய |
| तातः | தகப்பனுக |
| वानरेश्वरः | வானரேச்வரரான |
| सुग्रीवः | சுக்ரீவ |
| राजा तु | மன்னரும் |
| मे | எனது |
| कुशलं | நற்செய்கையை |
| एव | முற்றிலும் |
| अभिवादनपूर्वं च | நமஸ்காரபூர்வமாயே |
| वाच्यः | சொல்லப்படவேண்டியவர். |

**आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे ॥ १४ ॥**

| | |
|---|---|
| माता च | "தாயாரும் |
| रुमा | உருமை |
| आरोग्यपूर्वं | ஆரோக்யபூர்வமாய் |
| मे | எனது |
| कुशलं | நற்செய்கையை |
| वाच्या | சொல்லத்தக்கவள். |

**मातरं चैव मे तारामाश्वासयितुमर्हथ ॥ १५ ॥**

| | |
|---|---|
| मे | "எனது |
| तारां | தாரையென்ற |
| मातरं | தாயை |
| एव च | எல்லா ப்ரகாரத்தாலும் |
| आश्वासयितुं | தேறுதல் படுத்த |
| अर्हथ | வேண்டியவர்களாகிறீர்கள். |

**प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी । विनष्टं मामिह श्रुत्वा व्यक्तं हास्यति जीवितम् ॥**

| | |
|---|---|
| तपस्विनी | "பாக்கியக்குறைவிருப்பவள். |
| सानुक्रोशा | குழைந்த மனதுள்ளவள். |
| प्रकृत्या | இயற்கையால் |
| प्रियपुत्रा | புத்திரவாத்ஸல்யமுடையவள். |
| सा | அவள் |
| मां | என்னை |
| इह | இங்கு |
| विनष्टं | மரித்தவனுக |
| श्रुत्वा | அறிந்து, |
| व्यक्तं | நிச்சயமாய் |
| जीवितं | உயிரை |
| हास्यति | விட்டுவிடுவாள்." |

**एतावद्वचनं चोक्त्वा वृद्धानप्यभिवाद्य च । संविवेशाङ्गदो भूमौ रुदन्दर्भेषु दुर्मनाः ॥ १७ ॥**

| | |
|---|---|
| अङ्गदः | அங்கதன் |
| एतावत् | இவ்வாறு |
| वचनं | உறுதிமொழியை |
| उक्त्वा | சொல்லிவிட்டு, |
| वृद्धान् अपि | பெரியோர்களையும் |
| अभिवाद्य | வணங்கி, |
| दुर्मनाः | வ்யஸனம் பொங்கிய மனத்தனாய் |
| रुदन् | அழுதுகொண்டே |
| भूमौ | பூமியில் |
| दर्भेषु | தர்ப்பைகளில் |
| च च | தட்சணமே |
| संविवेश | படுத்தான். |

**तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः । नयनेभ्यः प्रमुमुचुरुष्णं वै वारि दुःखिताः ॥**

| | | | |
|---|---|---|---|
| तत्र | அப்படி | रुदन्तः वै | அழுதுகொண்டே |
| संविशतः | ஸங்கல்பம் செய்து கொண்ட | नयनेभ्यः | கண்களினின்றும் |
| तस्य | அவனுக்காக | उष्णं | உஷ்ணமான |
| वानरर्षभाः | வானர ச்ரேஷ்டர்கள் | वारि | நீரை |
| दुःखिताः | துக்கித்தவர்களாய் | प्रमुमुचुः | வடித்தார்கள். |

**सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च वालिनम् । परिवार्याङ्गदं सर्वे व्यवसन् प्रायमासितुम् ॥**

| | | | |
|---|---|---|---|
| सर्वे | எல்லோரும் | अङ्गदं | அங்கதனை |
| सुग्रीवं | சுக்ரீவனை | परिवार्य | சூழ்ந்துகொண்டு, |
| निन्दन्तः | நிந்தித்துக்கொண்டு | प्रायं एव | ப்ராயோபவேசத்தை |
| वालिनं | வாலியை | आसितुं | அனுஷ்டிக்க [யே |
| प्रशंसन्तः | வெகுவாய்ப் புகழ்ப வர்களாய் | च च | தட்சணமே |
| | | व्यवसन् | நிச்சயித்தார்கள். |

**मतं तद्वालिपुत्रस्य विज्ञाय प्लवगर्षभाः । उपस्पृश्योदकं सर्वे प्राङ्मुखाः समुपाविशन् ॥२०॥**

| | | | |
|---|---|---|---|
| प्लवगर्षभाः | வானரோத்தமர்கள் | प्राङ्मुखाः | கிழக்குநோக்கிய வர்களாய் |
| सर्वे | எல்லோரும் | | |
| वालिपुत्रस्य | வாலிபுத்திரனின் | उदकं | ஜலத்தை |
| तत् | அந்த | उपस्पृश्य | ஆசமனம்செய்து, |
| मतं | எண்ணத்தை | समुपाविशन् | உட்கார்ந்துகொண் டார்கள். |
| विज्ञाय | அறிந்துகொண்டு, | | |

**दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः । मुमूर्षवो हरिश्रेष्ठा एतत्क्षममिति स्म ह ॥२१॥**

| | | | |
|---|---|---|---|
| उदक्तीरं | ஜலக்கரையை | एतत् | இதுவே |
| समाश्रिताः | அடைந்தவர்களான | क्षमं | ஏற்றது, |
| हरिश्रेष्ठाः | வானரச்ரேஷ்டர்கள் | इति | என்று |
| दक्षिणाग्रेषु | தெக்கு நுனியாகப் பரப்பப்பட்ட | मुमूर्षवः स्म | உயிரை இழுக்க எண் ணங்கொண்டவர்களா யிருந்தார்கள். |
| दर्भेषु | தர்ப்பங்களில் | ह | காண். |

**रामस्य वनवासं च क्षयं दशरथस्य च । जनस्थानवधं चैव वधं चैव जटायुषः ॥ २२ ॥**
**हरणं चैव वैदेह्या वालिनश्च वधं रणे । रामकोपं च वदतां हरीणां भयमागतम् ॥ २३ ॥**

**एवं वदद्भिर्बहुभिर्महीधरो महाद्रिकूटप्रतिमैः प्लवङ्गमैः ।**
**बभूव संनादितनिर्झरान्तरो भृशं नदद्भिर्जलदैरिवोल्बणैः ॥ २४ ॥**

| | |
|---|---|
| रामस्य | ஸ்ரீராமருடைய |
| वनवासं च | வனவாசத்தையும், |
| दशरथस्य | தசரதரின் |
| क्षयं एव | மரணத்தையும், |
| जनस्थानवधं च | ஜனஸ்தானத்தின் அழிவுபாட்டையும், |
| वैदेह्याः | வைதேகியின் |
| हरणं च | அபஹாரணத்தையும், |
| जटायुषः | ஜடாயுவின் |
| वधं एव | வதையையும், |
| वालिनः | வாலியின் |
| रणे | யுத்தத்தில் |
| वधं च | வதையையும், |
| रामकोपं च | ஸ்ரீராமருடைய கோபத்தையும், |
| च | இவைகளினின்று |
| हरीणां एव | வானரர்களுக்கும் |
| आगतं | சம்பவித்த |
| भयं च | ஆபத்தையும் |
| वदतां | பேசிக்கொண்டிருக்குகயில் |
| महाद्रिकूटप्रतिमैः | பெருமலைச்சிகரங்களுக்கொப்பான |
| एवं | கீழ்ச்சொல்லியவாறு |
| वदद्भिः | பேசிக்கொண்டிருந்த |
| बहुभिः | அனேக [வர்களான |
| प्लवङ्गमैः | வானரர்களால் |
| उल्बणैः | நெருக்குண்ட |
| भृशं | அதிகமாக |
| नदद्भिः | முழங்குகிற |
| जलदैः इव | மேகங்களாற்போல |
| महीधरः | மலை |
| सन्नादित-निर्झरान्तरः | எதிரொலி முழங்குகிற அருவிகளையுடையதாக |
| बभूव | விளங்கிற்று. |

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः ॥**

आदितः श्लोकाः 11455 किष्किन्धाकाण्डे आदितः श्लोकाः 2203



## षट्पञ्चाशः सर्गः—ஐம்பத்தாறுவது ஸர்க்கம் ॥ ५६ ॥

**अङ्गदसंपातीनोः संवादः**—அங்கதனுடையவும் ஸம்பாதியினுடையவும் ஸம்வாதம்

**उपविष्टास्तु ते सर्वे यस्मिन्प्रायं गिरिस्थले । हरयो गृध्रराजश्च तं देशमुपचक्रमे ॥ १ ॥**

| | |
|---|---|
| ते | அந்த |
| सर्वे | எல்லா |
| हरयः | வானரர்களும் |
| यस्मिन् | எந்த |
| गिरिस्थले | மலையடிவாரத்தில் |
| प्रायं | ப்ராயோபவேசத்தை |
| उपविष्टाः | அடைந்திருந்தார்களோ, |
| तं | அந்த |
| देशं तु | இடத்தையே |
| गृध्रराजः च | கழுகுராஜரும் |
| उपचक्रमे | கிட்டினார். |

**संपातिर्नाम नाम्ना तु चिरञ्जीवी विहङ्गमः । भ्राता जटायुषः श्रीमान्प्रख्यातबलपौरुषः ॥**

| | |
|---|---|
| नाम्ना | பெயரினால் |
| संपातिः तु | ஸம்பாதியென்று |
| नाम | கூறப்படும் |
| चिरञ्जीवी | நீடித்த ஆயுளுடையவர். |
| विहङ्गमः | ஓர் பறவை. |
| जटायुषः | ஜடாயுவின் |
| भ्राता | சகோதரர். |
| श्रीमान् | பிரபாவமுள்ளவர். |
| प्रख्यात-बलपौरुषः | பிரசித்தமான பலபராக்கிரமங்களுற்றவர். |

**कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः । उपविष्टान्हरीन्दृष्ट्वा हृष्टात्मा गिरमब्रवीत् ॥**

| | | | |
|---|---|---|---|
| सः | அவர் | हरीन् | வானரர்களை |
| विन्ध्यस्य | விந்திய | दृष्ट्वा | கண்டு, |
| महागिरेः | மகாகிரியின் | हृष्टात्मा | உள்ளம்களித்தவராய் |
| कन्दरात् | குகையினின்று, | गिरं | மொழியை |
| अभिनिष्क्रम्य | வெளிவந்து, | अब्रवीत् | வெளிப்படச் சொன்னார். |
| उपविष्टान् | பிராயோபவேசம் செய்த | | |

**विधिः किल नरं लोके विधानेनानुवर्तते । यथाऽयं विहितो भक्ष्यश्चिरान्मह्यमिहागतः ॥**

| | | | |
|---|---|---|---|
| लोके | "உலகத்தில் | मह्यं | எனக்கு |
| विधिः | வினைப்பயன் | यथा | என்றே |
| नरं | மனிதனை | विहितः | நியமிக்கப்பட்ட, |
| विधानेन | விதியையொத்தே | अयं | இந்த |
| अनुवर्तते | தொடருகிறது. | भक्ष्यः | உணவு |
| किल | { இது பாரம்பர்யமாய் கேள்வியால் தெரிந்துகொண்ட சங்கதி. | इह | இப்பொழுது |
| | | चिरात् | நெடுங்காலங்கழித்து, |
| | | आगतः | தானாகவந்தது." |

**परं पराणां भक्षिष्ये वानराणां मृतं मृतम् । उवाचैतद्वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥**

| | | | |
|---|---|---|---|
| पक्षी | பறவை | मृतं मृतं | உயிரிழந்த பிணங்களை ஒன்றொன்றாக |
| तान् | அந்த | परं | வேண்டியமட்டும் |
| प्लवङ्गमान् | வானரர்களை | भक्षिष्ये | தின்னுவேன்" என்கிற |
| निरीक्ष्य | உற்றுநோக்கி, | एतत् वचः | இந்த மொழியை |
| पराणां | பெருத்தவர்களான | उवाच | சொல்லிற்று. |
| वानराणां | " வானரர்களின் | | |

**तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः । अङ्गदः परमायस्तो हनुमन्तमथाब्रवीत् ॥६॥**

| | | | |
|---|---|---|---|
| भक्ष्यलुब्धस्य | உணவாசைகொண்ட | श्रुत्वा | கேட்டு, |
| तस्य | அந்த | परमायस्तः | மிகவும் மனோவ்யாகுலமடைந்தவனாய் |
| पक्षिणः | பறவையின் | हनुमन्तं | ஹனுமாரைப்பார்த்து |
| तत् | அந்த | अथ | அப்பொழுது |
| वचनं | மொழியை | अब्रवीत् | சொன்னான். |
| अङ्गदः | அங்கதன் | | |

**पश्य सीतापदेशेन साक्षाद्वैवस्वतो यमः । इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७ ॥**

| | | | |
|---|---|---|---|
| सीतापदेशेन | ஸீதையென்ற வியாஜங்கொண்டு | साक्षात् यमः | ப்ரத்யக்ஷ யமனே |
| वानराणां | வானரர்களின் | इमं | இந்த |
| विपत्तये | அழிவின்பொருட்டு | देशं | இடத்திற்கு |
| वैवस्वतः | வைவஸ்வதனென்ற | अनुप्राप्तः | வந்திருக்கிறார் ; |
| | | पश्य | காண். |

**रामस्य न कृतं कार्यं राज्ञो न च वचः कृतम् । हरीणामियमज्ञाता विपत्तिः सहसाऽऽगता ॥**

| | | | |
|---|---|---|---|
| रामस्य | "ஸ்ரீராமருடைய | हरीणां | வானரர்களுக்கு |
| कार्यं | காரியம் | इयं | இந்த |
| न कृतं | செய்யப்படவில்லை. | अज्ञाता | எதிர்பாராத |
| राज्ञः | அரசருடைய | विपत्तिः | விபத்து |
| वचः च | கட்டளையும் | सहसा | தெரியாமலே |
| न कृतं | நிறைவேற்றப்பட வில்லை. | आगता | வந்திருக்கின்றது. |

**वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा । गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९ ॥**

| | | | |
|---|---|---|---|
| वैदेह्याः | "வைதேகிக்கு | यत् | எதுவோ |
| प्रियकामेन | நன்மைசெய்ய மனங் கொண்ட | तत् | அது |
| गृध्रराजेन | கழுகரசனான | कृतं | செய்யப்பட்டது. |
| जटायुषा | ஜடாயுவால் | वः | நமக்கு |
| तत्र | அந்த ப்ரஸக்தில் | अशेषतः | முற்றிலும் |
| कर्म | செய்யவேண்டியது | श्रुतम् | தெரிந்த விஷயமே. |

**तथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि । प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान्यथा वयम् ॥**
**अन्योन्यमुपकुर्वन्ति स्नेहकारुण्ययन्त्रिताः ॥ १० ॥**

| | | | |
|---|---|---|---|
| तथा | "அப்படியே | त्यक्त्वा | லக்ஷியம் செய்யாது |
| तिर्यग्योनिगतानि | திர்யக் ஜன்மங்களை யடைந்த | रामस्य | ஸ்ரீராமருக்கு [விட்டு, |
| सर्वाणि | எல்லா | प्रियं | உதவியை |
| भूतानि | பிராணிகளும், | कुर्वन्ति | புரிகின்றன. |
| वयं | நாம் | स्नेहकारुण्य- यन्त्रिताः | ப்ரீதியாலும் இரக்கத்தாலும் கட்டுண்டவர்களாய் |
| यथा | எப்படியோ அப்படி | अन्योन्यं | தனித்தனியே |
| प्राणान् अपि | உயிர்களையுங்கூட | उपकुर्वन्ति | நன்மை செய்கின்றன. |

**ततस्तस्योपकारार्थं त्यजतात्मानमात्मना । प्रियं कृतं हि रामस्य धर्मज्ञेन जटायुषा ॥ ११ ॥**

| | | | |
|---|---|---|---|
| ततः हि | "அதினாலேதான் | धर्मज्ञेन | அறமுணர்ந்த |
| रामस्य | ஸ்ரீராமருக்கு | जटायुषा | ஜடாயுவால் |
| उपकारार्थं | பணிவிடைபுரிய | तस्य | அவருக்கு |
| आत्मना | தானே | प्रियं | உதவி |
| आत्मानं | பிராணனை | कृतम् | புரியப்பட்டது. |
| त्यजता | விட்ட | | |

**राघवार्थे परिश्रान्ता वयं संत्यक्तजीविताः। कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम्॥**

| | | | |
|---|---|---|---|
| वयं | "நாம், | प्रपन्नाः | புகுந்தவர்களாய் |
| राघवार्थे | ஸ்ரீராகவரின் காரியத்தில் | संत्यक्तजीविताः | உயிர்போகின்றவர்களாய் |
| परिश्रान्ताः | மிகப் பிரயாசையை யெடுத்துக்கொண்டவர்களாய் | स्म | ஆனோம். |
| | | च | இன்னும் |
| | | मैथिलीं | மைதிலியை |
| कान्ताराणि | குகைகளையும் | न पश्याम | கண்டோமில்லை. |

**स सुखी गृध्रराजस्तु रावणेन हतो रणे। मुक्तश्च सुग्रीवभयाद्गतश्च परमां गतिम्॥ १३॥**

| | | | |
|---|---|---|---|
| तु | "இவ்விஷயத்தில் | सुग्रीवभयात् च | சுக்ரீவருடைய பயத்திலிருந்தும் |
| रणे | யுத்தத்தில் | | |
| रावणेन | ராவணனால் | मुक्तः | தப்பித்துக்கொண்டார். |
| हतः | கொல்லப்பட்ட | | |
| गृध्रराजः | கழுகராசர் | परमां | மிகவும் மேலான |
| सुखी | புண்யசாலி. | गतिं च | மோக்ஷத்தையும் |
| सः | அவர் | गतः | அடைந்தார். |

**जटायुषो विनाशेन राज्ञो दशरथस्य च। हरणेन च वैदेह्याः संशयं हरयो गताः॥ १४॥**
**रामलक्ष्मणयोर्वास अरण्ये सह सीतया। राघवस्य च बाणेन वालिनश्च तथा वधः॥१५॥**
**रामकोपादशेषाणां राक्षसानां तथा वधः। कैकेय्या वरदानेन इदं हि विकृतं कृतम्॥**

| | | | |
|---|---|---|---|
| कैकेय्याः | "கைகேயிக்கு | हरणेन च | அபஹரித்தலாலும் |
| वरदानेन हि | வரங்கொடுத்ததாலேயே | हरयः | வானரர்கள் |
| कृतं | விளைந்த | संशयं गताः | ப்ராணபத்தையடைந்தார்கள். |
| विकृतं | கேடு | | |
| इदं | இது. | तथा | அப்படியே |
| रामलक्ष्मणयोः | ஸ்ரீராமலக்ஷ்மணர்களுடைய | राघवस्य | ஸ்ரீராகவருடைய |
| अरण्ये | காட்டில் | बाणेन च | பாணத்தாலேயே |
| सीतया सह | ஸீதையோடுகூட | वालिनः | வாலியின் |
| वासः | வாஸம் | वधः | மரணம்; |
| दशरथस्य | தசரத | तथा | அப்படியே |
| राज्ञः च | மன்னருடையவும் | रामकोपात् | ஸ்ரீராமன்கோபத்தால் |
| जटायुषः च | ஜடாயுவினுடையவும் | राक्षसानां | இராக்ஷஸர்களின் |
| विनाशेन | மரணத்தோடேயே | अशेषाणां | எல்லாருக்கும் |
| वैदेह्याः | வைதேகியினுடைய | वधः | அழிவு. |

**तदसुखमनुकीर्तितं वचो भुवि पतितांश्च समीक्ष्य वानरान्।**
**भृशचलितमतिर्महामतिः कृपणमुदाहृतवान्स गृध्रराट्॥ १७॥**

| | | | |
|---|---|---|---|
| सः | அந்த | तत् | அந்த |
| महामतिः | மகாமதியான | वचः च | பேச்சையும் |
| गृध्रराट् | கழுகரசர் | समीक्ष्य | கவனித்துப்பார்த்து, |
| भुवि | பூமியில் | भृशचलितमतिः | மிக்க சஞ்சலமடைந்த மனத்தராய் |
| पतितान् | விழுந்து கிடக்கிற | कृपणं | இன்னது செய்கிற தென்று தெரியாத நிலைமையை |
| वानरान् च | வானரர்களையும் | | |
| अनुकीर्तितं | சொல்லப்பட்ட | | |
| असुखं | விவரம் முற்றிலும் தெரியாத | उदाहृतवान् | காட்டினார். |

**तत्तु श्रुत्वा तदा वाक्यमङ्गदस्य मुखोद्गतम् । अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥**

| | | | |
|---|---|---|---|
| तीक्ष्णतुण्डः | கூரான அலகையுடைய, | मुखोद्गतं | வாயிலிருந்து வந்த |
| महास्वनः | பெரிய குரலுமுடைய | तत् वाक्यं | அம்மொழியை |
| गृध्रः | கழுகு, | श्रुत्वा | கேட்டு, |
| तदा | அப்பொழுது | तु | இதுவிஷயத்தில் |
| | | वचनं | ஒரு மொழியை |
| अङ्गदस्य | அங்கதனுடைய | अब्रवीत् | சொல்லிற்று. |

**कोऽयं गिरा घोषयति प्राणैः प्रियतमस्य मे । जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः ॥**

| | | | |
|---|---|---|---|
| मे | "எனக்கு | कम्पयन् | நடுக்கமுறச்செய்பவ[னாய் |
| प्राणैः प्रियतमस्य | உயிரினுமினிய | अयं | இவன் |
| भ्रातुः | ஸஹோதரனை, | गिरा | நல்ல பேச்சால் |
| जटायुषः | ஜடாயுவினுடைய | घोषयति | புகழ்கிறான். |
| वधं | மரணத்தை பற்றி | कः | யாரென |
| मे मनः | எனது மனதை | इव | அறியவேண்டும். |

**कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः । नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम् ॥२०॥**

| | | | |
|---|---|---|---|
| भ्रातुः | "சகோதரனுடைய | श्रुतं | கேட்கப்பட்டது. |
| इदं | இந்த | जनस्थाने | ஜனஸ்தானத்தில் |
| नामधेयं | பெயரானது, | राक्षसगृध्रयोः | இராக்ஷஸனுக்கும் கழுகுக்கும் |
| मया | என்னால் | | |
| चिरस्य | வெகுகாலத்திற்குப் பிறகு | युद्धं | யுத்தம் |
| | | कथं | எப்படி |
| अद्य | இப்பொழுது | आसीत् | உண்டாயிற்று? |

**इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम् ॥ २१ ॥**

| | | | |
|---|---|---|---|
| गिरिदुर्गात् | "மலைத்துர்க்கத்திலிருந்து | भवद्भिः च | உங்களாலேயே |
| | | अवतारितुं | இறங்க |
| | | इच्छेयम् | விரும்புகின்றேன். |

**यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः । अतिदीर्घस्य कालस्य परितुष्टोऽस्मि कीर्तनात् ॥**

| | | | |
|---|---|---|---|
| अतिदीर्घस्य | "நீடித்த | गुणज्ञस्य | குணங்களை யறிந்தவனுமான |
| कालस्य | காலத்திற்கு பின் | यवीयसः | தம்பியினுடைய |
| विक्रमैः | பராக்கிரமங்களினால் | कीर्तनात् | புகழ்தலால் |
| श्लाघनीयस्य | கொண்டாடத்தகுந்தவனாய் | परितुष्टः अस्मि | மிகவும் சந்தோஷமடைந்தேன். |

**तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः । भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः ॥२३॥**

| | | | |
|---|---|---|---|
| तत् | "ஆகையால் | भ्रातुः | உடன்பிறந்த |
| वानरर्षभाः | வானரவீரர்காள்! | जटायुषः | ஜடாயுவின் |
| जनस्थान-निवासिनः | ஜனஸ்தானத்தில் வஸித்துக்கொண்டிருந்த | विनाशं | மரணத்தைப்பற்றி |
| | | अहं | நான் |
| | | श्रोतुं | அறிய |
| तस्य | அந்த | इच्छेयम् | விரும்புகிறேன். |

**तस्यैव च मम भ्रातुः सखा दशरथः कथम् । यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः ॥**

| | | | |
|---|---|---|---|
| गुरुजनप्रियः | "பெரியோரால் விரும்பப்படும் | दशरथः एव | தசரதரே |
| रामः | ஸ்ரீராமர் | मम | எனது |
| प्रियः | அன்பிற்குரிய | भ्रातुः | தம்பியான |
| ज्येष्ठः | மூத்த | तस्य | அவனுக்கு |
| पुत्रः | பிள்ளை | सखा | தோழனென்பது |
| यस्य | எவருக்கோ அந்த | कथं च | எப்படி? |

**सूर्यांशुदग्धपक्षत्वान्न शक्नोम्युपसर्पितुम् । इच्छेयं पर्वतादस्मादवतर्तुमरिन्दमाः ॥ २५ ॥**

| | | | |
|---|---|---|---|
| अरिन्दमाः | "ஜயசாலிகளே! | अस्मात् | இந்த |
| सूर्यांशुदग्ध-पक्षत्वात् | சூர்யகிரணங்களால் எரிந்துபோன சிறகுடையவனாதலால் | पर्वतात् | பர்வதத்திலிருந்து |
| | | अवतर्तुं | இறங்கிவிட |
| उपसर्पितुं | கிட்டவர | इच्छेयम् | வேண்டுமென்று |
| न शक्नोमि | முடியாதிருக்கிறேன். | | விரும்புகிறேன்." |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः ॥

आदितः श्लोकाः 11480 — किष्किन्धाकाण्डे आदितः श्लोकाः 2228



निखिलरामवृत्तान्तकथनम्—ஸ்ரீராமவிருத்தாந்தத்தை பூராவும் சொல்வது.

शोकाद्भ्रष्टस्वरमपि श्रुत्वा ते हरियूथपाः । श्रद्दधुर्नैव तद्वाक्यं कर्मणा तस्य शङ्किताः ॥ १ ॥

| | | | |
|---|---|---|---|
| शोकात् | சோகத்தால் | श्रुत्वा अपि | கேட்டும், |
| भ्रष्टस्वरं | நாத்தழுதழுத்துப் பேசிய | तस्य | அதனுடைய |
| तत् वाक्यं | அம்மொழியை | कर्मणा | செய்கையினால் |
| ते | அந்த | शङ्किताः | ஸந்தேகமுற்றவர்களாய் |
| हरियूथपाः | வானரோத்தமர்கள் | न श्रद्दधुः एव | நம்பவேயில்லை. |

ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः । चक्रुर्बुद्धिं तदा रौद्रां सर्वान्नो भक्षयिष्यति ॥ २ ॥

| | | | |
|---|---|---|---|
| प्रायं | பிராயோபவேசத்தை | नः | நம் |
| उपविष्टाः | அடைந்துள்ள | सर्वान् | எல்லோரையும் |
| ते | அந்த | भक्षयिष्यति | பக்ஷித்துவிடுமென்ற |
| प्लवङ्गमाः | வானரர்கள் | रौद्रां | குரூரமான |
| गृध्रं | கழுகை | बुद्धिं तु | எண்ணத்தையும் |
| दृष्ट्वा | பார்த்து, | तदा | அப்பொழுது |
| | | चक्रुः | கொண்டார்கள். |

सर्वथा प्रायमासीनान्यदि नो भक्षयिष्यति । कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः॥

| | | | |
|---|---|---|---|
| प्रायं | "ப்ராயோபவேசத்தை | इतः | இதனாலேயே |
| आसीनान् | அடைந்த | क्षिप्रं | சீக்கிரத்திலேயே |
| नः | நம்மை | कृतकृत्याः | க்ருதார்த்தர்களாய் |
| सर्वथा | எப்படியும் | सिद्धिं गताः | பேற்றை பெற்றவர்களாய் |
| भक्षयिष्यति | பக்ஷித்துவிடும்; | | |
| यदि | அப்படியாகில் | भविष्यामः | ஆவோம்." |

एतां बुद्धिं ततश्चक्रुः सर्वे ते वानरर्षभाः । अवतार्य गिरेः शृङ्गाद्गृध्रमाहाङ्गदस्तदा ॥ ४ ॥

| | | | |
|---|---|---|---|
| ते | அந்த | तदा | அச்சமயத்தில் |
| वानरर्षभाः | வானரச்ரேஷ்டர்கள் | अङ्गदः | அங்கதன் |
| सर्वे | எல்லோரும் | गिरेः | மலையின் |
| एतां | இந்த | शृङ्गात् | சிகரத்தினின்று |
| बुद्धिं | அபிப்பிராயத்தை | अवतार्य | இறக்கி, |
| चक्रुः | கொண்டார்கள். | गृध्रं | கழுகைப்பார்த்து |
| ततः | அப்படியிருந்தும் | आह | சொன்னான். |

**बभूवर्क्षरजो नाम वानरेन्द्रः प्रतापवान् । ममार्यः पार्थिवः पक्षिन्धार्मिकस्तस्य चात्मजौ ॥**

| | | | |
|---|---|---|---|
| पक्षिन् | "பக்ஷியாரே! | धार्मिकः | தர்மகுணமுடையவர். |
| ऋक्षरजः | ரிக்ஷரஜஸ் | पार्थिवः | ராஜரீக ப்ரபுத்வம் |
| नाम | என்று பெயருடைய | मम | எனக்கு [பெற்றவர். |
| वानरेन्द्रः | ஒரு வானரவேந்தர் | आर्यः | குரு. |
| बभुव | இருந்தார். | तस्य | அவருக்கு |
| प्रतापवान् | பிரதாபமுடையவர். | आत्मजौ: च | இரண்டு குமாரர்கள். |

**सुग्रीवश्चैव वाली च पुत्रावोघबलावुभौ । लोके विश्रुतकर्माऽभूद्राजा वाली पिता मम ॥६॥**

| | | | |
|---|---|---|---|
| वाली च | "வாலியென்பவரும் | पिता | பிதாவாகிய |
| सुग्रीवः च | சுக்ரீவரென்பவரும் | वाली | வாலியெனும் |
| उभौ | இரண்டு | राजा एव | அரசர்தான் |
| पुत्रौ | குமாரர்கள். | लोके | உலகத்தில் |
| ओघबलौ | அளவற்ற பலமுடையவர்கள். | विश्रुतकर्मा | பேர்போன தொழிலாற்றலுடையவராக |
| मम | எனது | अभूत् | இருந்தார். |

**राजा कृत्स्नस्य जगत इक्ष्वाकूणां महारथः । रामो दाशरथिः श्रीमान्प्रविष्टो दण्डकावनम् ॥**
**लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया । पितुर्निर्देशनिरतो धर्म्यं पन्थानमाश्रितः ॥**

| | | | |
|---|---|---|---|
| दाशरथिः | தசரத குமாரராகிய | पन्थानं | வழியை |
| रामः | ஸ்ரீராமர் | आश्रितः | பற்றியவராய் |
| कृत्स्नस्य | ஸகல | पितुः | பிதாவின் |
| जगतः | உலகிற்கும் | निर्देशनिरतः | கட்டளைப்படி நடப்பவராய் |
| राजा | அரசர். | | |
| इक्ष्वाकूणां | இக்ஷ்வாகு வம்சத்தவர்களுடைய | भ्राता | தம்பி |
| | | लक्ष्मणेन सह | லக்ஷ்மணரோடும் |
| महारथः | பேர்போன போர்வீரர். | भार्यया | மனைவி |
| | | वैदेह्या च | வைதேகியோடும் |
| श्रीमान् अपि | ஸ்ரீமானாக இருந்தும் | दण्डकावनं | தண்டகாவனத்திற்கு |
| धर्म्यं | தரும | प्रविष्टः | வந்திருந்தார். |

**तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ९ ॥**

| | | | |
|---|---|---|---|
| तस्य | அவருடைய | रावणेन | ராவணனால் |
| भार्या | மனைவி | बलात् | பலாத்காரமாய் |
| जनस्थानात् | ஜனஸ்தானத்திலிருந்து | हृता | திருடிக்கொண்டு போகப்பட்டாள். |

**रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् । ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा ॥१०॥**

| | |
|---|---|
| रामस्य | " ஸ்ரீராமருடைய |
| पितुः | தந்தையின் |
| मित्रं | நண்பராகிய |
| जटायुः | ஜடாயு |
| नाम | என்ற |
| गृध्रराट् | கழுகரசர் |
| विहायसा | ஆகாயமார்க்கமாய் |
| ह्रियमाणां | எடுத்துக்கொண்டு போகப்படுகிற |
| वैदेहीं | விதேகமன்னன் மகளான |
| सीतां | சீதையை |
| तु | இந்நிலைமையில் |
| ददर्श | கண்டார். |

**रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् । परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥**

| | |
|---|---|
| रणे | " போரில் |
| रावणं | ராவணனை |
| विरथं | தேரில்லாதவனாக |
| कृत्वा | செய்து, |
| मैथिलीं च | மைதிலியையும் |
| स्थापयित्वा | தைரியப்படுத்தி, |
| वृद्धः | அம்முதியவர் |
| च | அதினால் |
| परिश्रान्तः | களைப்படைந்திருந்தார். |
| च | அப்படி இருந்ததால் |
| रावणेन | ராவணனால் |
| हतः | அடியுண்டார். |

**एवं गृध्रो हतस्तेन रावणेन बलीयसा । संस्कृतश्चापि रामेण गतश्च गतिमुत्तमाम् ॥ १२ ॥**

| | |
|---|---|
| तेन | " அந்த |
| बलीयसा | வலிய |
| रावणेन | ராவணனால் |
| एवं | இவ்வாறு |
| हतः | அடியுண்டவர் |
| गृध्रः अपि | கழுகாயிருந்தும் |
| रामेण | ஸ்ரீராமரால் |
| संस्कृतः | ஸம்ஸ்காரம் செய்யப் பெற்றவராய் |
| च च | தட்சணமே |
| उत्तमां | நல்ல |
| गतिं | கதியை |
| गतः | அடைந்தார். |

**ततो मम पितृव्येण सुग्रीवेण महात्मना । चकार राघवः सख्यं सोऽवधीत्पितरं मम॥१३॥**

| | |
|---|---|
| राघवः | " ஸ்ரீராகவர் |
| मम | எனது |
| पितृव्येण | சிற்றப்பனான |
| सुग्रीवेण | சுக்ரீவனோடும் |
| महात्मना | மகாத்மாவோடு |
| सख्यं | சக்யத்தை |
| चकार | செய்துகொண்டார். |
| ततः | அதினால் |
| सः | அவர் |
| मम | எனது |
| पितरं | பிதாவை |
| अवधीत् | கொன்றார். |

**मम पित्रा विरुद्धो हि सुग्रीवः सचिवैः सह । निहत्य वालिनं रामस्ततस्तमभ्यषेचयत् ॥**

| | |
|---|---|
| सुग्रीवः | " சுக்ரீவர் |
| सचिवैः सह | மந்திரிமார்களோடு கூட |
| मम | எனது |
| पित्रा | தந்தையால் |
| विरुद्धः | ஊரைவிட்டுத் துரத்தப்பட்டிருந்தார். |
| ततः | அதினால் |
| रामः हि | ஸ்ரீராமரே |
| वालिनं | வாலியை |
| निहत्य | கொன்று, |
| तं | அவருக்கு |
| अभ्यषेचयत् | ராஜ பட்டாபிஷேகம் செய்துவைத்தார். |

**स राज्ये स्थापितस्तेन सुग्रीवो वानरेश्वरः । राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥**

| | | | |
|---|---|---|---|
| येन | “இக்காரணத்தால் | वानरेश्वरः | வானரர்களுக்கு அதிபனாய் |
| सः | அந்த | स्थापितः | நிலைநிறுத்தப்பட்டார். |
| सुग्रीवः | சுக்ரீவர் | तेन | அவரால் |
| वानरमुख्यानां | வானரச்ரேஷ்டர்களுடைய | वयं | நாங்கள் |
| राज्ये | ராஜ்யத்தில் | प्रस्थापिताः | அனுப்பப்பட்டோம். |
| राजा | அரசராக | | |

**एवं रामप्रयुक्तास्तु मार्गमाणास्ततस्ततः । वैदेहीं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ॥१६॥**

| | | | |
|---|---|---|---|
| एवं | “இவ்விதம் | वैदेहीं | வைதேகியை |
| रामप्रयुक्ताः | ஸ்ரீராமருக்காகப் பாடுபடுபவர்களாய் | रात्रौ | இரவில் |
| ततस्ततः | எல்லாவிடங்களினும் | सूर्यप्रभां | சூர்யவெளிச்சத்தை |
| मार्गमाणाः | தேடுபவர்களாய் | इव | போல |
| तु | ஆகியும் | न अधिगच्छामः | கண்டோமில்லை. |

**ते वयं दण्डकारण्यं विचित्य सुसमाहिताः । अज्ञानात्तु प्रविष्टाः स्म धरण्यां विवृतं बिलम् ॥**

| | | | |
|---|---|---|---|
| ते | “அந்த | विचित्य तु | ஆராய்ந்து தேடியும், |
| वयं | நாங்கள் | अज्ञानात् | தெரியாமையால் |
| सुसमाहिताः | அதிக கவனமுள்ளவர்களாய் | धरण्यां | பூமியில் |
| | | विवृतं | வாய் திறந்திருந்த |
| | | बिलं | பிலத்தை |
| दण्डकारण्यं | தண்டகாரண்யத்தை | प्रविष्टाः स्म | புகுந்தோம்- |

**मयस्य मायाविहितं तद्बिलं च विचिन्वताम् । व्यतीतस्तत्र नो मासो यो राज्ञा समयः कृतः ॥**

| | | | |
|---|---|---|---|
| मयस्य | “மயனுடைய | नः | எங்களுக்கு |
| मायाविहितं | மாயையால் செய்யப்பட்ட | राज्ञा | அரசரால் |
| | | समयः | தவணையாக |
| तत् | அந்த | कृतः | குறிப்பிட்டிருந்த |
| बिलं | பிலத்தை | मासः | ஒருமாதம் |
| च | முற்றிலும் | यः | எதுவோ அதுவும் |
| विचिन्वतां | தேடித்திரிந்துகொண்டிருந்த | तत्र | அங்கேயே |
| | | व्यतीतः | கடக்கப்பட்டது. |

**ते वयं कपिराजस्य सर्वे वचनकारिणः । कृतां संस्थामतिक्रान्ता भयात्प्रायमुपास्महे ॥**

| | | | |
|---|---|---|---|
| ते | “அந்த | संस्थां | தவணையை |
| वयं | நாங்கள் | अतिक्रान्ताः | மீறியவர்களாய் |
| कपिराजस्य | வானரவேந்தனுடைய | सर्वे | எல்லோரும் |
| वचनकारिणः | ஏவல்களுக்குட்பட்டு நடப்பவர்கள். | भयात् | பயந்து |
| | | प्रायं | பிராயோபவேசத்தை |
| कृतां | குறித்த | उपास्महे | அனுஷ்டிக்கிறோம். |

**क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे । गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥**

| | | | |
|---|---|---|---|
| तस्मिन् | அந்த | गतानां | திரும்பிவந்த |
| सलक्ष्मणे | லக்ஷ்மணருடனிருக் | नः | எங்கள் |
| काकुत्स्थे | காகுத்ஸ்தரும், [கிற | सर्वेषां | எல்லோருக்கும் |
| सुग्रीवे च | சுக்ரீவரும் | तत्र | அங்கே |
| क्रुद्धे तु | கோபம்கொண்டிருக்கும்பொழுது | जीवितं अपि | உயிருடனிருத்தல் |
| | | न अस्ति | இராது." [கூட |

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे सप्तपञ्चाशः सर्गः ॥**

आदितः श्लोकाः **11500**  किष्किन्धाकाण्डे आदितः श्लोकाः **2248**

## अष्टपञ्चाशः सर्गः—ஐம்பத்தியெட்டாவது ஸர்க்கம் ॥ ५८ ॥

### लङ्कायां सीतावस्थानप्रदर्शनम्—லங்கையில் ஸீதையிருப்பதைக் காண்பிப்பது.

**इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः । सबाष्पो वानरान्गृध्रः प्रत्युवाच महास्वनः ॥**

| | | | |
|---|---|---|---|
| त्यक्तजीवितैः | பிராணனை விட்டு துணிந்திருக்கிற | उक्तः | சொல்லப்பட்ட |
| | | महास्वनः | பெரிய குரலையுடைய |
| वानरैः | வானரர்களால் | गृध्रः | கழுகு |
| इति | இந்த | सबाष्पः | கண்களில் நீர் ததும்ப |
| करुणं | இரக்கமுண்டாகும்படியான | वानरान् | வானரர்களைப் பார்த்து |
| वाक्यं | சமாசாரத்தை | प्रत्युवाच | பதில் சொல்லிற்று. |

**यवीयान्मम स भ्राता जटायुर्नाम वानराः । यमाख्यात हतं युद्धे रावणेन बलीयसा ॥२॥**

| | | | |
|---|---|---|---|
| वानराः | " வானரர்கள் ! | जटायुः | ஜடாயுவெனும் |
| बलीयसा | வலிய | नाम | பெயரையுடைய |
| रावणेन | ராவணனால் | सः | அவன் |
| युद्धे | யுத்தத்தில் | मम | எனது |
| हतं | கொல்லப்பட்டதாக | यवीयान् | இளைய |
| यं | எவனை | भ्राता | சகோதரன். |
| आख्यात | சொன்னீர்களோ | | |

**वृद्धभावादपक्षत्वाच्छृण्वंस्तदपि मर्षये । न हि मे शक्तिरद्यास्ति भ्रातुर्वैरविमोक्षणे ॥ ३ ॥**

| | | | |
|---|---|---|---|
| वृद्धभावात् | "வயதின் முதிமையாலும், | हि | ஏனென்றால் |
| | | अद्य | இப்பொழுது |
| अपक्षत्वात् | சிறகின்மையினாலும், | भ्रातुः | சகோதரனுடைய |
| तत् | அதை | वैरविमोक्षणे | பழிக்குப்பழி வாங்குதலில் |
| शृण्वन् अपि | கேட்டவனாக இருந்தும், | मे | எனக்கு |
| | | शक्तिः | திறமை |
| मर्षये | பொறுத்திருக்கிறேன். | न अस्ति | கிடையாது. |

**पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ। आदित्यमुपयातौ स्वो ज्वलन्तं रश्मिमालिनम् ॥**

| | | | |
|---|---|---|---|
| पुरा | முன் ஒருகாலத்தில் | रश्मिमालिनं | கிரணவரிசைகளால் சூழப்பட்டதாய் |
| वृत्रवधे | விருத்தாசுரவதம் | ज्वलन्तं | ஜ்வலித்துக்கொண்டிருந்த |
| वृत्ते | நடந்தபொழுது | आदित्यं | ஆதித்யனை |
| सः च | அவனும் | उपयातौ स्वः | கிட்டிப் பறந்து சென்றோம். |
| अहं च | நானும் | | |
| जयैषिणौ | ஒருவரை ஒருவர் வெல்ல விரும்பியவர்களாய் | | |

**आवृत्याकाशमार्गेण जवेन स्वो गतौ भृशम्। मध्यं प्राप्ते सवितरि जटायुरवसीदति ॥५॥**

| | | | |
|---|---|---|---|
| आकाशमार्गेण | ஆகாசமார்க்கமாய் | सवितरि | சூரியன் |
| भृशं | மிகவும் | मध्यं | உச்சியை |
| जवेन | வேகத்தோடு | प्राप्ते | அடைந்தபொழுது |
| आवृत्य | சுற்றிச்சுற்றி, | जटायुः | ஜடாயு |
| गतौ स्वः | சென்றோம். | अवसीदति | கிளைப்புற்றான். |

**तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरार्दितम्। पक्षाभ्यां छादयामास स्नेहात्परमविह्वलम् ॥६॥**

| | | | |
|---|---|---|---|
| भ्रातरं | தம்பியான | दृष्ट्वा | கண்டு, |
| तं | அவனை | अहं | நான் |
| सूर्यरश्मिभिः | சூரியகிரணங்களால் | स्नेहात् | அன்பினால் |
| आर्दितं | களைப்புற்றவனாகவும், | पक्षाभ्यां | இரண்டு சிறகுகளினாலும், |
| परमविह्वलं | மிக்க மெய்மறந்தவனாகவும், | छादयामास | மறைத்தேன். |

**निर्दग्धपक्षः पतितो विन्ध्येऽस्मिन् वानरोत्तमाः। अहमस्मिन्वसन्भ्रातुः प्रवृत्तिं नोपलक्षये ॥**

| | | | |
|---|---|---|---|
| वानरोत्तमाः | "வானரோத்தமர்களே! | अहं | நான் |
| | | अस्मिन् | இதில் |
| अस्मिन् | இந்த | वसन् | காலம்கழிப்பவனாய் |
| विन्ध्ये | விந்தியமலையில் | भ्रातुः | தம்பியின் |
| निर्दग्धपक्षः | சிறகெரிந்தவனாய் | प्रवृत्तिं | செய்தி ஒன்றையும் |
| पतितः | விழுந்தவனானேன். | न उपलक्षये | அறியேன்." |

**जटायुषस्त्वेवमुक्तो भ्रात्रा संपातिना तदा। युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा ॥८॥**

| | | | |
|---|---|---|---|
| जटायुषः | ஜடாயுவின் | उक्तः | சொல்லப்பட்ட |
| भ्राता | பிராதாவான | महाप्राज्ञः तु | பேரறிவுடையவனும், |
| सम्पातिना | ஸம்பாதியால் | युवराजः | இளவரசனுமான |
| तदा | அப்பொழுது | अङ्गदः | அங்கதன் |
| एवं | மேற்சொல்லிய வண்ணம் | तदा | அப்பொழுது |
| | | प्रत्युवाच | பதிலாக உரைத்தான். |

**जटायुषो यदि भ्राता श्रुतं ते गदितं मया। आख्याहि यदि जानासि निलयं तस्य रक्षसः॥**

| | | | |
|---|---|---|---|
| ते | "உமக்கு | भ्राता यदि | பிராதாவாக இருப்பதால், |
| मया | என்னால் | तस्य | அந்த |
| गदितं | சொல்லப்பட்டது, | रक्षसः | ராக்ஷஸனுடைய |
| श्रुतं | கேட்டறிந்துகொள்ளப்பட்டது. | निलयं | இருப்பிடத்தை |
| जटायुषः | ஜடாயுவுக்கு | जानासि यदि | அறிவீர் ஆகில், |
| | | आख्याहि | சொல்லும். |

**अदीर्घदर्शिनं तं वा रावणं राक्षसेश्वरम्। अन्तिके यदि वा दूरे यदि जानासि शंस नः॥**

| | | | |
|---|---|---|---|
| अन्तिके वा | "சமீபத்திலோ, | रावणं | ராவணனை |
| दूरे यदि | அல்லது தூரத்திலோ | जानासि | அறிவீர் |
| अदीर्घदर्शिनं | தீர்க்காலோசனையில்லாத | यदि | ஆகில், |
| राक्षसेश्वरं | ராக்ஷஸாதிபனாகிய | नः | எங்களுக்கு |
| तं | அந்த | शंस | சொல்லும். |
| | | वा | அறிய விரும்புகிறோம். |

**ततोऽब्रवीन्महातेजा ज्येष्ठो भ्राता जटायुषः। आत्मानुरूपं वचनं वानरान् संप्रहर्षयन्॥**

| | | | |
|---|---|---|---|
| ततः | இதன்மேல், | सम्प्रहर्षयन् | மகிழ்விப்பவராய் |
| महातेजाः | மிக்கத்திறமையுடைய | आत्मानुरूपं | தனது கீர்த்திக்கனுகுணமான |
| जटायुषः | ஜடாயுவின் | वचनं | சொல்லை |
| ज्येष्ठः भ्राता | தமயன், | अब्रवीत् | சொன்னார். |
| वानरान् | வானரர்களை | | |

**निर्दग्धपक्षो गृध्रोऽहं हीनवीर्यः प्लवङ्गमाः। वाङ्मात्रेण तु रामस्य करिष्ये साह्यमुत्तमम्॥**

| | | | |
|---|---|---|---|
| प्लवङ्गमाः | "வானரர்காள்! | रामस्य | ஸ்ரீராமருக்கு |
| अहं | நான் | उत्तमं | பெரிய |
| निर्दग्धपक्षः | சிறகெரிந்த | साह्यं | உதவியை |
| गृध्रः | கழுகு | वाङ्मात्रेण | வாக்குமாத்திரத்தினாலேயே |
| हीनवीर्यः | வலிகுன்றியவன். | करिष्ये | செய்கின்றேன். |
| तु | இப்படியிருப்பதால் | | |

**जानामि वारुणांल्लोकान्विष्णोस्त्रैविक्रमानपि। देवासुरविमर्दांश्च ह्यमृतस्यापि मन्थनम्॥१३॥**

| | | | |
|---|---|---|---|
| लोकान् | "உலகங்களையும், | देवासुरविमर्दान् च | தேவாஸுரயுத்தங்களையும், |
| वारुणान् अपि | நீர் மூடினவைகளையும், | अमृतस्य | அமுதத்திற்கு |
| विष्णोः | திருமாலின் | मन्थनं अपि | கடைந்ததையும் |
| त्रैविक्रमान् | திருவிக்ரமஅவதார மூன்று அடிவைப்புகளையும், | हि | உள்ளபடி |
| | | जानामि | அறிவேன். |

**रामस्य यदिदं कार्यं कर्तव्यं प्रथमं मया । जरयाऽपहृतं तेजः प्राणाश्च शिथिला मम ॥१४॥**

| | | | |
|---|---|---|---|
| जरया | "மூப்பினால் | रामस्य | ஸ்ரீராமருடைய |
| मम | எனது | इदं | இந்த |
| तेजः | வலிமை | कार्यं | காரியம் |
| अपहृतं | குன்றியதானது. | मया | என்னால் |
| प्राणाः च | பிராணன்களும் | प्रथमं | உடனே |
| शिथिलाः | சிதறுகின்றன. | कर्तव्यम् | செய்யப்படவேண்டியது. |
| यत् | இக்காரணத்தால் | | |

**तरुणी रूपसम्पन्ना सर्वाभरणभूषिता । ह्रियमाणा मया दृष्टा रावणेन दुरात्मना ॥ १५ ॥**
**क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी । भूषणान्यपविध्यन्ती गात्राणि च विधून्वती ॥**

| | | | |
|---|---|---|---|
| राम राम | "ஓ ராம ராம," | भामिनी | பெண்ணணங்காள் |
| इति च | என்றும் | दुरात्मना | துராத்மாவான |
| लक्ष्मण | "லக்ஷ்மணா" | रावणेन | ராவணனால், |
| इति | என்றும் | ह्रियमाणा | தூக்கிக்கொண்டுபோகப்பட்டவளாயும் |
| क्रोशन्ती | கதறுபவளும் | गालाणि च | அங்கங்களை |
| सर्वाभरणभूषिता | எல்லா ஆபரணங்களாலும் அலங்கரிக்கப்பட்டவளுமான | विधून्वती | உதறிக்கொண்டு |
| रूपसम्पन्ना | ரூபஸம்பன்னையானவளும் | भूषणानि | ஆபரணங்களை |
| तरुणी | இளமையையுடைய | अपविध्यन्ती | கழற்றி எறிபவளாயும் |
| | | मया | என்னால் |
| | | दृष्टा | காணப்பட்டாள். |

**सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम् । असिते राक्षसे भाति यथा वा तडिदम्बुदे ॥**

| | | | |
|---|---|---|---|
| तस्याः | அவளுடைய | सूर्यप्रभा इव | சூரியகாந்தியோ |
| उत्तमं | சிறந்த | वा | அல்லது |
| कौशेयं | கோசிகப்பட்டு | अम्बुदे | மேகத்தில் |
| असिते | கரிய | तडित् यथा | மின்னலோ வெனும்படி |
| राक्षसे | ராக்ஷஸன்பேரில் | | |
| शैलाग्रे | மலையினுச்சியில் | भाति | விளங்கிற்று. |

**तां तु सीतामहं मन्ये रामस्य परिकीर्तनात् । श्रूयतां मे कथयतो निलयं तस्य रक्षसः ॥**

| | | | |
|---|---|---|---|
| रामस्य | ஸ்ரீராமருடைய | तस्य | அந்த |
| परिकीर्तनात् | பெயரைச் சொன்னமையால் | रक्षसः | ராக்ஷஸனின் |
| | | निलयं | இருப்பிடம் |
| तां तु | அவளைத்தான் | कथयतः | சொல்லுகிற |
| सीतां | சீதாதேவியென்று | मे | என்னிடத்தினின்று |
| अहं | நான் | श्रूयताम् | செவிகொடுத்துக் கேட்டுக்கொள்ளப்படட்டும். |
| मन्ये | எண்ணுகிறேன். | | |

**पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च। अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः॥**

| | | | |
|---|---|---|---|
| विश्रवसः | "விச்ரவஸின் | नाम | என்னும் பெயரை யுடைய |
| साक्षात् | ஸாக்ஷாத் | | |
| पुत्रः | புதல்வன் ; | राक्षसः च | அரக்கன். |
| वैश्रवणस्य | குபேரனுக்கு | लङ्कां | லங்கை என்ற |
| भ्राता | ப்ராதா. | नगरीं | பட்டணத்தை |
| रावणः | ராவணன் | अध्यास्ते | ஆண்டுவருகிறான். |

**इतो द्वीपे समुद्रस्य संपूर्णे शतयोजने। तस्मिल्लङ्कापुरी रम्या निर्मिता विश्वकर्मणा॥२०॥**
**जाम्बूनदमयैर्द्वारैश्चित्रैः काञ्चनवेदिकैः। प्रासादैर्हेमवर्णैश्च महद्भिः सुसमा कृता॥**
**प्राकारेणार्कवर्णेन महता सुसमावृता ॥ २१ ॥**

| | | | |
|---|---|---|---|
| इतः | "இங்கிருந்து | हेमवर्णैः | தங்கநிறமான |
| सम्पूर्णे | பூர்ணமான | प्रासादैः च | உப்பரிகைகளாலும், |
| शतयोजने | நூறுயோசனையுள்ள | सुसमा कृता | செம்மையாய் அமைக் கப்பெற்றதும், |
| समुद्रस्य | சமுத்திரத்தின் [தும் | | |
| तस्मिन् | அந்த | अर्कवर्णेन | சூரிய ஒளியுடைய |
| द्वीपे | தீவில் | महता | பெரிய |
| विश्वकर्मणा | விசுவகர்மாவினால் | प्राकारेण | மதிலால் |
| महद्भिः | பெரிய | सुसमावृता | முற்றிலும் சூழப்பட் டதுமான |
| जाम्बूनदमयैः | பொன்மயமான | | |
| द्वारैः | வாயில்களாலும், | रम्या | அழகிய |
| चित्रैः | அழகிய | लङ्का पुरी | இலங்கை நகரம் |
| काञ्चनवेदिकैः | பொன்னால் செய்த வேதிகைகளாலும், | निर्मिता | செய்யப்பட்டது. |

**तस्यां वसति वैदेही दीना कौशेयवासिनी। रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता॥**

| | | | |
|---|---|---|---|
| कौशेयवासिनी | "கோசிகப்பட்டுடுத்திய | रुद्धा | காவலில் வைக்கப் பட்டவளாய் |
| वैदेही | வைதேகியார் | | |
| दीना | மனவேக்கங்கொண்ட | राक्षसीभिः | ராக்ஷஸிகளால் |
| तस्यां | அதில் [வளாய் | सुरक्षिता | காவல்காக்கப்பட்டவளாய் |
| रावणान्तःपुरे | ராவணனுடைய அந்தப்புரத்தில் | वसति | இருக்கிறாள். |

**जनकस्यात्मजां राज्ञस्तत्र द्रक्ष्यथ मैथिलीम्। लङ्कायामथ गुप्तायां सागरेण समन्ततः॥**

| | | | |
|---|---|---|---|
| समन्ततः | "எல்லாப்பக்கங்களி லும் | जनकस्य | ஜனக |
| | | राज्ञः | ராஜரின் |
| सागरेण | கடலால் | आत्मजां | புத்திரியாகிய |
| गुप्तायां | சூழப்பட்ட | मैथिलीं | மைதிலியாரை |
| तत्र | அந்த | अथ | அப்பொழுது |
| लङ्कायां | இலங்கையில் | द्रक्ष्यथ | காணுங்கள். |

संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनम् । आसाद्य दक्षिणं तीरं ततो द्रक्ष्यथ रावणम् ॥

| | | | |
|---|---|---|---|
| सागरस्यान्तं | " ஸமுத்திரக்கரையை | तीरं | தீரத்தை |
| सम्प्राप्य | அடைந்து, | आसाद्य | அடைந்து, |
| संपूर्णं | பூர்த்தியான | ततः | அவ்விடத்தில் |
| शतयोजनं | நூறுயோஜனையுள்ள | रावणं | ராவணனை |
| दक्षिणं | தென் | द्रक्ष्यथ | காணுங்கள். |

तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः । ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥

| | | | |
|---|---|---|---|
| प्लवङ्गमाः | " வானரர்காள் ! | खलु | நிச்சயமாய், |
| त्वरिताः | வேகமுடையவர்க | दृष्ट्वा | பார்த்துவிட்டு, |
| तत्र एव | அங்கேயே [ளாய் | प्रत्यागमिष्यथ | திரும்பிவருவீர்கள். |
| क्षिप्रं | உடனே | ज्ञानेन | ஞானத்தினால் |
| विक्रमध्वं | தாண்டுங்கள். | पश्यामि | காண்கின்றேன். |

आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः । द्वितीयो बलिभोजानां ये च वृक्षफलाशिनः ॥

| | | | |
|---|---|---|---|
| कुलिङ्गानां | " ஊர்க்குருவிகளுக்கு | बलिभोजानां | காக்கைகளுக்கு |
| आद्यः | முதலாவது | द्वितीयः | இரண்டாவது |
| पन्थाः | பறப்பின் எல்லை. | | |
| अन्ये | சாதாரணங்களான | ये च | எவைகளோ |
| ये च | எவைகளோ | | அவைகள் |
| धान्यजीविनः | அவைகள் தானியங்களை உண்டு பிழைப்பவைகள். | वृक्षफलाशिनः | விருக்ஷங்களின் பழங்களை உண்கிறவைகள். |

भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह । श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् ॥

| | | | |
|---|---|---|---|
| कुररैः सह | மீன்குத்திப்பறவைகளோடுகூடிய | श्येनाः | பருந்துகள் |
| | | चतुर्थं | நான்காவதை |
| क्रौञ्चाः च | க்ரௌஞ்சங்களும், | गच्छन्ति | அடைகின்றன. |
| भासाः च | ராஜாளிகளும் | गृध्राः | கழுகுகள் |
| तृतीयं | மூன்றாவதை | पञ्चमं | ஐந்தாவதை |
| गच्छन्ति | அடைகின்றன. | गच्छन्ति | அடைகின்றன. |

बलवीर्योपपन्नानां रूपयौवनशालिनाम् । षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा ॥
वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः ॥ २८ ॥

| | | | |
|---|---|---|---|
| बलवीर्योपपन्नानां | வலியும் வீரமுமுடைய | वैनतेयगतिः | வினதையின் புதல்வர்களின் போக்கின் எல்லை |
| रूपयौवनशालिनां | அழகும் இளமையும் பொருந்திய | परा | எல்லாவற்றிலும் மேலானது. |
| हंसानां तु | அன்னங்களுக்குத் | नः | எங்கள் |
| षष्ठः | ஆறாவது [தான் | सर्वेषां | எல்லோருக்கும் |
| पन्थाः | பறப்பின் எல்லை. | वैनतेयात् च | வினதையின் புதல்வ |
| वानरर्षभाः | வானரோத்தமர்களே ! | जन्म | ஜன்மம். [ரிடமிருந்தே |

**गर्हितं तु कृतं कर्म येन स्म पिशिताशिना । प्रतीकार्यं च मे तस्य वैरं भ्रातुः कृतं भवेत् ॥**

| | | | |
|---|---|---|---|
| पिशिताशिना | "மாமிசத்தைத் தின்கின்றவனால் | प्रतीकार्यं तु | பிரதிகூலம் செய்யத் [தக்கதே. |
| | | च | அதனால் |
| कृतं | செய்யப்பட்ட | मे | எனது |
| कर्म | காரியம் | भ्रातुः | பிராதாவின் |
| गर्हितं स्म | நிந்திக்கத்தக்கது. | वैरं | பழிக்குப்பழி |
| येन | அக்காரணத்தால் | कृतं | செய்யப்பட்டதாக |
| तस्य | அவனுக்கு | भवेत् | ஆகும். |

**इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा । अस्माकमपि सौपर्णं दिव्यं चक्षुर्बलं तथा ॥**

| | | | |
|---|---|---|---|
| अहं | "நான் | सौपर्णं | கருடனுக்குள்ள |
| इहस्थः | இங்கிருந்துகொண்டே | दिव्यं | திவ்யமான |
| रावणं | ராவணனையும் | चक्षुः | கண்பார்வையும் |
| तथा | அப்படியே | बलं | பலமும் |
| जानकीं | ஜானகியாரையும் | तथा | அந்தப்பிரகாரமே |
| प्रपश्यामि | காண்கின்றேன். | अस्माकं अपि | எங்களுக்கும். |

**तस्मादाहारवीर्येण निसर्गेण च वानराः । आयोजनशतात्साग्राद्वयं पश्याम नित्यशः ॥३१॥**

| | | | |
|---|---|---|---|
| वानराः | "வானரர்காள் ! | नित्यशः | எப்பொழுதும் |
| तस्मात् | அக்காரணத்தால் | आयोजनशतात् | நூறு யோஜனைவரையில் |
| आहारवीर्येण | உணவின் வலியாலும் | | |
| निसर्गेण च | இயற்கையாலும் | साग्रात् | இருக்குமிடத்தில் |
| वयं | நாங்கள் | पश्याम | காண்போம். [நின்று |

**अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः । विहिता पादमूले तु वृत्तिश्चरणयोधिनाम् ॥**

| | | | |
|---|---|---|---|
| निसर्गेण | "இயற்கையால் | चरणयोधिनां | கோழிகளுக்கு |
| अस्माकं | எங்களுக்கு | वृत्तिः | இரைதேடல் |
| वृत्तिः | இரைதேடல் | पादमूले तु | காலடியிலேயே |
| दूरतः च | தூரத்திலேயே | विहिता | ஏற்படுத்தப்பட்டிருக்கிறது. |
| विहिता | ஏற்படுத்தப்பட்டிருக்கிறது. | | |

**उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ॥ ३३ ॥**

| | | | |
|---|---|---|---|
| लवणाम्भसः | • "உப்புக்கடலின் | उपायः | சூழ்ச்சி |
| लङ्घने | தாண்டுதலில் | दृश्यताम् | கண்டுகொள்ளப்படட்டும். |
| कश्चित् | ஒரு | | |

**अभिगम्य तु वैदेहीं समृद्धार्था भविष्यथ ॥ ३४ ॥**

| | | | |
|---|---|---|---|
| वैदेहीं | "வைதேகியாரை | समृद्धार्थाः तु | காரியசித்திபெற்றவர்களாகவே |
| अभिगम्य | கண்டு, | भविष्यथ | ஆவீர்கள். |

**समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् । प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥**

| | | | |
|---|---|---|---|
| वरुणालयं | " ஜலத்திற்கிருப்பிடமான | इच्छामि | வேண்டுகிறேன். |
| समुद्रं | சமுத்திரத்திற்கு | स्वर्गतस्य | சுவர்க்கமடைந்த |
| भवद्भिः | உங்களால் | महात्मनः | மகாத்மாவான |
| नेतुं | எடுத்துக்கொண்டு போகப்பட | भ्रातुः | சகோதரனுக்கு |
| | | उदकं प्रदास्यामि | தர்ப்பணம் செய்கிறேன் ". |

**ततो नीत्वा तु तं देशं तीरे नदनदीपतेः । निर्दग्धपक्षं संपातिं वानराः सुमहौजसः ॥३६॥**
**पुनः प्रत्यानयित्वा च तं देशं पतगेश्वरम् । बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥३७॥**

| | | | |
|---|---|---|---|
| सुमहौजसः | மிக்க பலமுடைய | तं | அந்த |
| वानराः | வானரர்கள் | पतगेश्वरं | பறவையரசை |
| नदनदीपतेः | சமுத்திரத்தின் | पुनः | மீளவும் |
| तीरे | தீரத்தில் | देशं | இருப்பிடத்திற்கு |
| तं, | அந்த, | प्रत्यानयित्वा | திருப்பிக்கொண்டு வந்து, |
| निर्दग्धपक्षं | சிறகெரிந்த | प्रवृत्तिं तु | தற்கால சமாசாரத்தையும் |
| सम्पातिं | சம்பாதியை | उपलभ्य | கேட்டறிந்துகொண்டு, |
| ततः | அங்கிருந்து | च | அதனால் |
| देशं | குறிப்பிட்டவிடத்திற்கு | हृष्टाः | மிக சந்தோஷமடைந்தவர்களாய் |
| नीत्वा | கொண்டுபோய், | बभूवुः | ஆனார்கள். |
| ते | அந்த | | |
| वानराः | வானரர்கள் | | |

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
किष्किन्धाकाण्डे अष्टपञ्चाशः सर्गः ॥

आदितः श्लोकाः 11537 किष्किन्धाकाण्डे आदितः श्लोकाः 2285



## एकोनषष्टितमः सर्गः—ஐம்பத்தொன்பதாவது ஸர்க்கம் ॥ ५९ ॥

सुपार्श्ववचनानुवादः—ஸுபார்சுவன் சொன்னதை சொல்வது.

**ततस्तदमृतास्वादं गृध्रराजेन भाषितम् । निशम्य मुदिता हृष्टास्ते वचः प्लवगर्षभाः ॥१॥**

| | | | |
|---|---|---|---|
| ततः | அங்கு | तत् | அந்த |
| ते | அந்த | वचः | வார்த்தையை |
| प्लवगर्षभाः | வானர வீரர்கள் | निशम्य | கேட்டு, |
| गृध्रराजेन | கழுகரசால் | मुदिताः | சந்தோஷமடைந்தவர்களாய் |
| भाषितं | சொல்லப்பட்ட | हृष्टाः | மயிர்க்கூச்சமடைந்தார்கள். |
| अमृतास्वादं | அமிருதம்போல் இனிய | | |

**जाम्बवान्वानरश्रेष्ठः सह सर्वैः प्लवङ्गमैः । भूतलात्सहसोत्पत्य गृध्रराजं तमब्रवीत् ॥ २ ॥**

| | | | |
|---|---|---|---|
| वानरश्रेष्ठः | வானரர்களுக்குத் தலைமையான | भूतलात् | பூமியிலிருந்து |
| | | सहसा | திடீரென்று |
| जाम्बवान् | ஜாம்பவந்தர் | उत्पत्य | எழும்பி, |
| सर्वैः | எல்லா | तं | அந்த |
| प्लवङ्गमैः | வானரர்களோடு | गृध्रराजं | கழுகரசைப்பார்த்து |
| सह | கூட | अब्रवीत् | மீளவும் கேட்டார். |

**क्व सीता केन वा दृष्टा को वा हरति मैथिलीम् । तदाख्यातु भवान्सर्वं गतिर्भव वनौकसाम् ॥**

| | | | |
|---|---|---|---|
| सीता | "சீதாதேவியார் | तत् | அந்த |
| क्व | எங்கே | सर्वं | எல்லாவற்றையும் |
| केन वा | எவனாலாவது | भवान् | நீர் |
| दृष्टा | காணப்பட்டாளா ? | आख्यातु | சொல்லவேண்டும். |
| मैथिलीं | மைதிலியாரை | वनौकसां | வானரர்களுக்கு |
| कः वा | எவன்தான் | गतिः | ரக்ஷகராக |
| हरति | எடுத்துப்போனான் ? | भव | ஆகுவீர். |

**को दाशरथिबाणानां वज्रवेगनिपातिनाम् । स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम् ॥**

| | | | |
|---|---|---|---|
| वज्रवेगनिपातिनां | "வஜ்ராயுதம்போல் வேகமாய் விழுகின்ற, | दाशरथिबाणानां | தாசரதி பாணங்களின் |
| | | विक्रमं | வலியை |
| स्वयं | பிரயாசையின்றி | कः | எவன் |
| लक्ष्मणमुक्तानां | லக்ஷ்மணரால் விடப்பட்ட, | चिन्तयति न | எத்தன்மையான தென்று அறியாதிருப்பான் ?" |

**स हरीन्प्रीतिसंयुक्तान्सीताश्रुतिसमाहितान् । पुनराश्वासयन्प्रीत इदं वचनमब्रवीत् ॥ ५ ॥**

| | | | |
|---|---|---|---|
| सः | அவர் | हरीन् | வானரர்களை |
| प्रीतः | சந்தோஷமுற்றவராய் | आश्वासयन् | நம்பிக்கையுண்டாகும்படி செய்பவராய் |
| प्रीतिसंयुक्तन् | அன்போடுகூடிய | | |
| सीताश्रुति-समाहितान् | சீதையின் செய்தியைக் கேட்க ஒன்றுகூடியவர்களான | पुनः | மறுபடியும் |
| | | इदं वचनं | இந்த மொழியை |
| | | अब्रवीत् | சொன்னார். |

**श्रूयतामिह वैदेह्या यथा मे हरणं श्रुतम् । येन चापि ममाख्यातं यत्र चायतलोचना ॥**

| | | | |
|---|---|---|---|
| वैदेह्याः | "வைதேஹியாரின் | यत्र च | எங்கிருக்கிறாள் |
| हरणं | தூக்கிக்கொண்டுபோகுதல் | येन | எவனால் [என்பதும், |
| मम | எனக்கு | मे | எனக்கு |
| यथा | எப்படி | आख्यातं अपि | சொல்லப்பட்டதென்பதும் |
| श्रुतं च | தெரிவிக்கப்பட்டதென்பதும் | इह च | இப்பொழுதே |
| आयतलोचना | நெடுங்கண்ணாள் | श्रूयताम् | கேட்கப்படட்டும். |

**अहमस्मिन्गिरौ दुर्गे बहुयोजनमायते । चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७ ॥**

| | | | |
|---|---|---|---|
| अहं | " நான் | आयते | நீண்ட |
| वृद्धः | மூப்படைந்தவனாய் | दुर्गे | புகவரிய |
| क्षीणप्राणपराक्रमः | உயிரும் வலியும் குன் | गिरौ | மலையில் |
| अस्मिन् | இந்த [றியவனாய் | चिरात् | நெடுநாளாய் |
| बहुयोजनं | அனேக யோஜனை தூரம் | निपतितः | விழுந்து கிடக்கிறேன். |

**तं मामेवं गतं पुत्रः सुपार्श्वो नाम नामतः । आहारेण यथाकालं बिभर्ति पततां वरः ॥८॥**

| | | | |
|---|---|---|---|
| एवं | " இவ்வித | नाम | என்னும் |
| गतं | கதியடைந்த | नामतः | பெயரையுடைய |
| तं मां | அந்த என்னை | पुत्रः | புத்திரன் |
| पततां | பறவைகளுக்குள் | यथाकालं | காலந்தப்பாது |
| वरः | சிறந்த | आहारेण | ஆகாரங்கொண்டு |
| सुपार्श्वः | ஸுபார்ச்வன் | बिभर्ति | போஷிக்கிறான். |

**तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः । मृगाणां तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम् ॥**

| | | | |
|---|---|---|---|
| गन्धर्वाः | " கந்தர்வர்கள் | भयं तु | பயம் தான் |
| तीक्ष्णकामाः | தீக்ஷ்ணமான காம முடையவர்கள். | तीक्ष्णं | தீக்ஷ்ணமானது. |
| भुजङ्गमाः | நாகர்கள் | वयं | நாங்கள் |
| तीक्ष्णकोपाः | தீக்ஷ்ணமான கோப முடையவர்கள். | ततः | அதைக்காட்டிலும் |
| मृगाणां तु | மான்களுக்கோ | तीक्ष्णक्षुधाः | தீக்ஷ்ணப்பசியுடையவர்கள். |

**स कदाचित्क्षुधार्तस्य मम चाहारकाङ्क्षिणः । गतसूर्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः ॥**

| | | | |
|---|---|---|---|
| कदाचित् | "ஒருநாள் | पुत्रः | புதல்வன் |
| क्षुधार्तस्य | பசியால் வருந்தியும் | गतसूर्ये अहनि | சூரியாஸ்தமனவேளை [யில் |
| आहारकांक्षिणः | உணவை எதிர்பார்த்துமிருந்த | मम च | எனக்கே |
| मम | என்னுடைய | अनामिषः हि | இறைச்சியில்லாதவனாகவே |
| सः | அந்த | प्राप्तः | வந்துசேர்ந்தான். |

**स मया वृद्धभावाच्च कोपाच्च परिभर्त्सितः । क्षुत्पिपासापरीतेन कुमारः पततां वरः ॥ ११ ॥**

| | | | |
|---|---|---|---|
| पततां | "பறவைகளில் | मया | என்னால் |
| वरः | சிறந்த | वृद्धभावात् च | மூப்பினாலும், |
| सः | அந்த | कोपात् च | கோபத்தினாலும் |
| कुमारः | குமாரன் | परिभर्त्सितः | கடிந்து பேசப்பட்டான். |
| क्षुत्पिपासापरीतेन | பசிதாகங்களால் வருந்திய | | |

**स मामाहारसंरोधात्पीडितं प्रीतिवर्धनः । अनुमान्य यथातत्त्वमिदं वचनमब्रवीत् ॥ १२ ॥**

| | | | |
|---|---|---|---|
| प्रीतिवर्धनः | " அன்பை விருத்தி செய்யும் | मां | என்னை |
| सः | அவன் | अनुमान्य | பொருதிக்கேட்டு, |
| आहारसंरोधात् | ஆகாரம் கிட்டாமையால் | इदं | இந்த |
| पीडितं | வருந்தும் | वचनं | விஷயத்தை |
| | | यथातत्त्वं | நடந்தபடியே |
| | | अब्रवीत् | சொன்னான். |

**अहं तात यथाकालमामिषार्थी खमाप्लुतः । महेन्द्रस्य गिरेर्द्वारमावृत्य च समास्थितः ॥१३॥**

| | | | |
|---|---|---|---|
| तात | " ஐயா ! | आप्लुतः | கிட்டியவனாய் |
| अहं | நான் | महेन्द्रस्य | மகேந்திர |
| आमिषार्थी | இரைதேட | गिरेः | மலையில் |
| यथाकालं च | சரியான காலத்திலேயே | द्वारं | வழியை |
| खं | ஆகாயத்தை | आवृत्य | மறைத்துகொண்டு, |
| | | समास्थितः | நின்றேன். |

**तत्र सत्त्वसहस्राणां सागरान्तरचारिणाम् । पन्थानमेकोऽध्यवसं संनिरोद्धुमवाङ्मुखः ॥**

| | | | |
|---|---|---|---|
| सागरान्तरचारिणां | " சமுத்திரமத்தியில் சஞ்சரிக்கும் | एकः | தனியாய் |
| सत्त्वसहस्राणां | பல ஜந்துக்களின் | अवाङ्मुखः | துணிகரமாய் |
| पन्थानं | வழியை | सन्निरोद्धुं | தடுக்க |
| तत्र | அங்கு | अध्यवसम् | நான் எண்ணங்கொண்டிருந்தேன். |

**तत्र कश्चिन्मया दृष्टः सूर्योदयसमप्रभाम् । स्त्रियमादाय गच्छन्वै भिन्नाञ्जनचयोपमः ॥१५॥**

| | | | |
|---|---|---|---|
| तत्र | " அப்பொழுது | गच्छन् वै | போய்க்கொண்டிருக்கிற |
| सूर्योदयसमप्रभां | உதிக்கிற சூரியகாந்திக்கொப்பான ஒளியையுடைய | भिन्नाञ्जनचयोपमः | பிளந்த மைமலையை நிகர்த்த கரியனான |
| स्त्रियं | ஒரு பெண்ணை | कश्चित् | ஒருவன் |
| आदाय | எடுத்துக்கொண்டு, | मया | என்னால் |
| | | दृष्टः | காணப்பட்டான். |

**सोऽहमभ्यवहारार्थं तौ दृष्ट्वा कृतनिश्चयः । तेन साम्ना विनीतेन पन्थानमभियाचितः ॥**

| | | | |
|---|---|---|---|
| तौ | " அவர்களை | तेन | அவனால் |
| दृष्ट्वा | பார்த்து, | साम्ना | கெஞ்சிக்கேட்டுக்கொள்ளுதலால் |
| अभ्यवहारार्थं | உணவுக்குதவுமென்று | पन्थानं | வழியை |
| कृतनिश्चयः | தீர்மானித்திருந்த | अभियाचितः | விடும்படி பிரார்த்திக்கப்பட்டேன். |
| सः | அந்த | | |
| अहं | நான் | | |
| विनीतेन | வணக்கத்தோடு கூடிய | | |

**न हि सामोपपन्नानां प्रहर्ता विद्यते क्वचित् । नीचेष्वपि जनः कश्चित्किमङ्ग बत मद्विधः ॥**

| | | | |
|---|---|---|---|
| सामोपपन्नानां | " ஸாமோபாயத்தைக் கைக்கொண்டவர்களுக்கு | कश्चित् जनः | ஒருவனுவது |
| प्रहर्ता | விரோதியாய் வதை செய்பவன் | क्वचित् | எங்கேயும் |
| नीचेषु अपि | நீசர்களில்கூட | विद्यते न हि | இல்லை அன்றே. |
| | | मद्विधः | என் போன்றவன் |
| | | किमङ्ग | கேட்கவேண்டுமோ? |
| | | बतः | ஐயோ! |

**स यातस्तेजसा व्योम संक्षिपन्निव वेगितः । अथाहं खचरैर्भूतैरभिगम्य सभाजितः ॥१८॥**

| | | | |
|---|---|---|---|
| सः | " அவன் | यातः | சென்றுன். |
| तेजसा | ஆற்றலினுல் | खचरैः | ஆகாசசஞ்சாரிகளான |
| व्योम | ஆகாயத்தை | भूतैः | ஷித்தர்களால், |
| अभिगम्य | அடைந்து, | अहं | நான் |
| संक्षिपन् इव | சுருக்கி விடுபவன் போல் | अथ | இப்பொழுது |
| वेगितः | அதிவேகமாய் | सभाजितः | மிகவும் கொண்டாடப் பட்டேன். |

**दिष्ट्या जीवति सीतेति ह्यब्रुवन्मां महर्षयः । कथंचित्सकलत्रोऽसौ गतस्ते स्वस्त्यसंशयम् ॥**

| | | | |
|---|---|---|---|
| मां | " என்னைப்பார்த்து | असौ हि | அவனும் |
| महर्षयः | மகரிஷிகள் | कथंचित् | தப்பித்துக்கொண்டு |
| दिष्ट्या | " நல்லகாலத்தால் | गतः | சென்றுன். |
| सीता | ஸீதாதேவியார் | ते | உனக்கு |
| जीवति | பிழைத்திருக்கிறுள். | स्वस्ति | மங்களம் |
| सकलत्रः | காப்பாற்றவேண்டிய தான பொருளைக் கைக்கொண்ட | असंशयं | சந்தேகமேயில்லை" |
| | | इति, अब्रुवन् | என்று சொன்னுர்கள். |

**एवमुक्तस्ततोऽहं तैः सिद्धैः परमशोभनैः ॥ २० ॥**

| | | | |
|---|---|---|---|
| परमशोभनैः | " மிக மங்களகரமான | अहं | நான் |
| तैः | அந்த | ततः | மீளவும் |
| सिद्धैः | சித்தர்களால் | एवं | பின்வருமாறு |
| | | उक्तः | சொல்லப்பட்டேன். |

**स च मे रावणो राजा रक्षसां प्रतिवेदितः । हरन्दाशरथेर्भार्यां रामस्य जनकात्मजाम् ॥**
**भ्रष्टाभरणकौशेयां शोकवेगपराजिताम् । रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्धजाम् ॥२२॥**

| | | | |
|---|---|---|---|
| मुक्तमूर्धजां | " தலைமயிர் அவிழ்த்தவளாயும், | भ्रष्टाभरणकौशेयां | நழுவிவிழும் ஆபரணத்தையும், வஸ்திரத்தையுமுடையவளாயும், |
| शोकवेगपराजितां | துக்கத்தின் வேகத்தால் திகைப்புண்டவளாயும், | रामलक्ष्मणयोः | ஸ்ரீராமலக்ஷ்மணர்களின் |

| | | | |
|---|---|---|---|
| नाम | நாமங்களையே | सः च | அவன்தான் |
| क्रोशन्तीं | கதறுகிறவளாயும், | रक्षसां | ராக்ஷஸர்களுக்கு |
| जनकात्मजां | ஜனகரின் மகளுமாகிய | राजा | அரசனை |
| दाशरथेः | தசரதபுத்திரரான | रावणः | ராவணன்" என்று |
| रामस्य | ஸ்ரீராமருடைய | मे | எனக்கு |
| भार्यां | பத்னியை | प्रतिवेदितः | தெரிவிக்கப்பட்டது. |
| हरन् | திருடிக்கொண்டு போகிற | | |

एष कालात्ययस्तावदिति कालविदां वरः। एतमर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत्॥२३॥

| | | | |
|---|---|---|---|
| एषः | "இதுதான் | सुपार्श्वः | ஸுபார்ச்வன் |
| कालात्ययः तावत् | காலதாமதம்" | एतं | இந்த |
| इति | என்று | अर्थं | விஷயத்தை |
| कालविदां | காலமறிந்தவர்களுள் | समग्रं | ஆதியோடந்தமாக |
| वरः | சிறந்த | मे | எனக்கு |
| | | प्रत्यवेदयत् | தெரிவித்தான். |

तच्छ्रुत्वाऽपि हि मे बुद्धिर्नासीत्काचित्पराक्रमे। अपक्षो हि कथं पक्षी कर्म किंचिदुपक्रमे॥

| | | | |
|---|---|---|---|
| तत् श्रुत्वा अपि | "அதைச் சொல்லக் கேட்டும் | न आसीत् | உண்டாகவில்லை. |
| मे | எனக்கு | हि | ஏனென்றால் |
| पराक्रमे | பராக்கிரமவிஷயத்தில் | अपक्षः | சிறகில்லாத |
| | | पक्षी हि | பக்ஷி அன்றோ! |
| काचित् | யாதொரு | कथं | எப்படி |
| बुद्धिः | புத்தியும் | किञ्चित् कर्म | ஒரு காரியத்தை |
| | | उपक्रमे | நான்தொடங்குவேன்? |

यत्तु शक्यं मया कर्तुं वाग्बुद्धिगुणवर्तिना। श्रूयतां तत्प्रवक्ष्यामि भवतां पौरुषाश्रयम्॥

| | | | |
|---|---|---|---|
| वाग्बुद्धि-गुणवर्तिना | "இன்சொல், நற்புத்தி, நற்குணம் இவைகளைப்பின்பற்றின | प्रवक्ष्यामि | சொல்லுவேன் |
| | | तत् तु | அதுவும் |
| | | भवतां | உங்களுடைய |
| मया | என்னால் | पौरुषाश्रयं | பலத்தையே பொருத்தது. |
| कर्तुं शक्यं | செய்யமுடிந்தது | | |
| यत् | ஏதுவோ அதை | श्रूयताम् | கேட்கப்படட்டும். |

वाङ्मतिभ्यां तु सर्वेषां करिष्यामि प्रियं हि वः। यद्धि दाशरथेः कार्यं मम तन्नात्र संशयः॥

| | | | |
|---|---|---|---|
| वाङ्मतिभ्यां तु | "மனமொழிகளா [லேயே | कार्यं | காரியம் |
| वः | உங்கள் | यत् हि | எதுவோ |
| सर्वेषां | எல்லோருக்கும் | तत् | அது |
| प्रियं | ஹிதத்தை | मम हि | என்னுடையதே. |
| करिष्यामि | செய்வேன். | अत्र | இவ்விஷயத்தில் |
| दाशरथेः | தசரதபுத்திரரின் | संशयः न | சந்தேகமில்லை. |

**ते भवन्तो मतिश्रेष्ठा बलवन्तो मनस्विनः। प्रहिताः कपिराजेन देवैरपि दुरासदाः ॥२७॥**

**कपिराजेन** "வானரவேந்தனால்
**प्रहिताः** நியமிக்கப்பட்ட
**ते** அந்த
**भवन्तः** நீங்கள்
**मतिश्रेष्ठाः** சிறந்த புத்திசாலிகள்.
**मनस्विनः** நல்ல எண்ணமுடையவர்கள்.
**देवैः अपि** தேவர்களாலும்
**दुरासदाः** வெல்லமுடியாதவர்கள்.
**बलवन्तः** மிகுந்த பலசாலிகள்.

**रामलक्ष्मणबाणाश्च निशिताः कङ्कपत्रिणः। त्रयाणामपि लोकानां पर्याप्तास्त्राणनिग्रहे ॥**

**कङ्कपत्रिणः** "கழுகிறகு கட்டப்பட்ட
**निशिताः** கூரிய
**रामलक्ष्मणबाणाः च** ஸ்ரீராமலக்ஷ்மணர்களின் பாணங்களோ
**त्रयाणां** மூன்று
**लोकानां** உலகங்களை
**त्राणनिग्रहे अपि** ஸம்ரக்ஷிப்பதிலும் ஸம்ஹாரத்திலும்
**पर्याप्ताः** வல்லவைகள்.

**कामं खलु दशग्रीवस्तेजोबलसमन्वितः। भवतां तु समर्थानां न किञ्चिदपि दुष्करम् ॥**

**दशग्रीवः** "தசக்ரீவன்
**तेजोबलसमन्वितः खलु** வலியும் ஆண்மையும் உடையவன்தான்.
**कामं तु** ஆயினும்,
**समर्थानां** சமர்த்தர்களாகிய
**भवतां** உங்களுக்கு
**दुष्करं** செய்தற்கரியது
**किञ्चिदपि न** ஒன்றுமில்லை.

**तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः। न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥**

**तत्** "ஆகையால்
**कालसङ्गेन** காலவிளம்பம்
**अलं** போதும்;
**बुद्धिनिश्चयः** தீர்மானயோசனை
**क्रियतां** செய்யப்படட்டும்.
**भवद्विधाः** உங்களைப்போன்ற
**बुद्धिमन्तः** புத்திமான்கள்
**कर्मसु** காரியங்களில்
**न सज्जन्ते** தயங்கார்கள்.
**हि** அன்றோ!"

**इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः ॥**

आदितः श्लोकाः **11567** — किष्किन्धाकाण्डे आदितः श्लोकाः **2315**

## षष्टितमः सर्गः—அறுபதாவது ஸர்க்கம் ॥ ६० ॥

**सम्पातिना स्वस्य वृत्तान्तकथनम्**—ஸம்பாதி தன் விருத்தாந்தத்தைச் சொல்வது.

**ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः। उपविष्टा गिरौ दुर्गे परिवार्य समन्ततः ॥ १ ॥**

**ततः** பிறகு
**हरियूथपाः** வானரவீரர்கள்
**स्नातं** ஸ்நானம்பண்ணி
**कृतोदकं** நீர்க்கடன் செய்து முடித்த
**तं** அந்த
**गृध्रं** கழுகை
**समन्ततः** நாற்புறமும்
**परिवार्य** சூழ்ந்து,
**गिरौ** பர்வத
**दुर्गे** சிகரத்தில்
**उपविष्टाः** உட்கார்ந்தார்கள்.

**तमङ्गदमुपासीनं तैः सर्वैर्हरिभिर्वृतम् । जनितप्रत्ययो हर्षात्संपातिः पुनरब्रवीत् ॥ २ ॥**

| | | | |
|---|---|---|---|
| जनितप्रत्ययः | மனஸ்ஸந்துஷ்டி கொண்ட | उपासीनं | சமீபத்தில் உட்கார்ந்திருந்த |
| संपातिः | சம்பாதி | तं | அந்த |
| तैः | அந்த | अङ्गदं | அங்கதனைப்பார்த்து |
| हरिभिः | வானரர்கள் | हर्षात् | உத்சாகத்தால் |
| सर्वैः | எல்லாராலும் | पुनः | மீளவும் |
| वृतं | சூழப்பட்ட | अब्रवीत् | சொன்னார். |

**कृत्वा निःशब्दमेकाग्राः शृण्वन्तु हरयो मम । तत्त्वं सङ्कीर्तयिष्यामि यथा जानामि मैथिलीम् ॥**

| | | | |
|---|---|---|---|
| मैथिलीं | "மைதிலியாரை | सङ्कीर्तयिष्यामि | விஸ்தாரமாய்ச் சொல்லப்போகிறேன். |
| यथा जानामि | எந்தவிதமாய் நான் அறிவேனோ அந்தப்படியே | हरयः | வானரர்களே ! |
| | | निःशब्दं कृत्वा | நிச்சப்தமாயிருந்துகொண்டு |
| मम | எனது | एकाग्राः | ஏகாக்ரசித்தர்களாய் |
| तत्त्वं | மனதிலுள்ளதை | शृण्वन्तु | கேளுங்கள். |

**अस्य विन्ध्यस्य शिखरे पतितोऽस्मि पुरा वने । सूर्यातपपरीताङ्गो निर्दग्धः सूर्यरश्मिभिः ॥**

| | | | |
|---|---|---|---|
| पुरा | "முன்னர் | अस्य | இந்த |
| सूर्यातपपरीताङ्गः | சூரியவெய்யிலினால் உடல்வாடிய | विन्ध्यस्य | விந்தியமலையின் |
| | | शिखरे | சிகரத்தில் |
| सूर्यरश्मिभिः | சூரியகிரணங்களால் | वने | ஒரு காட்டில் |
| निर्दग्धः | தகிக்கப்பட்டவனாய் | पतितः अस्मि | விழுந்தேன். |

**लब्धसंज्ञस्तु षड्रात्राद्विवशो विह्वलन्निव । वीक्षमाणो दिशः सर्वा नाभिजानामि किञ्चन ॥**

| | | | |
|---|---|---|---|
| विवशः | "ஸ்மரணை தப்பினவனாய், | लब्धसंज्ञः | அறிவையடைந்தவனாய் |
| | | सर्वाः | எல்லா |
| विह्वलन् | ஏக்கம்பிடித்தவனாய், | दिशः | திசைகளும் |
| इव | இதேமாதிரியாய், | वीक्षमाणः तु | விழித்துப்பார்த்தும் |
| षड्रात्रात् | ஆறு இரவுகளுக்கப்பால் | किञ्चन | ஒன்றும் |
| | | न अभिजानामि | புலப்படாதிருந்தேன். |

**ततस्तु सागराञ्शैलान्नदीः सर्वाः सरांसि च । वनान्युदधिवेलां च समीक्ष्य मतिरागमत् ॥**

| | | | |
|---|---|---|---|
| ततः तु | "பிறகு | सरांसि च | ஏரிகளையும், |
| सागरान् | கடல்களையும், | वनानि च | காடுகளையும், |
| शैलान् | மலைகளையும், | उदधिवेलां | கடற்கரையையும் |
| सर्वाः | எல்லா | समीक्ष्य | ஊன்றிப்பார்த்து; |
| नदीः | நதிகளையும், | मतिः | தன்னறிவு |
| | | आगमत् | வந்தது. |

